**गृहस्थधर्मं विधिवच्चरन्नरोऽनुरूपभार्यासहितः समाहितः ।**
**मृत्युं विजित्याखिलसौख्यमाप्त्वा भार्यासमेतस्त्रिदिवं प्रयायात् ॥**

एवं सुमतिवचनं श्रुत्वा विस्मितः सुगुणः सप्रश्रयमेतं सखायं प्रत्यपृच्छत्—

कामकोपमदमत्सरलोभ-
द्वेषवस्तुममतादिमदोषैः ।
दूषिते गृहिजनस्य च धर्मे
कोऽत्र मृत्युमयि मित्र विजेता ॥ १०७ ॥

सुगुणस्य वचः श्रुत्वा सुमतिर्हृष्टमानसः ।
तद्वृत्तज्ञानसश्रद्धं मित्रं वीक्ष्याब्रवीदिदम् ॥ १०८ ॥

तस्माद्गृहस्थाश्रमधर्म एष
स्त्रियैव सत्यात्र नृणां समृद्धिम्
प्रयाति देवर्षिपितृप्रसादं
संप्रापयत्याचरितश्च मर्त्यान् ॥ १०९ ॥

गृहस्थधर्मं विधिवन्मनुष्यः
समाचरन्मृत्युमपीह सत्यम् ।
बध्वा जयेदात्महितं चरन्त्या
सुदर्शनाख्यानमिह प्रमाणम् ॥ ११० ॥

ततः सखे एतादृशगृहस्थधर्मसारविद्भिः सवधूजनसार्थैः सुकृतसमार्जनव्यग्रचित्तैर्महाजनैः सकलाभिमतसिद्धिमत्तया सादरमभिपूर्यमाणे परिदृश्यमाने नातिमहत्यपि ग्रामेऽस्मिन् शुद्धसत्वविग्रहस्य सर्वत्र प्रख्यातनिजमहिम्नो भगवतः श्रीकृष्णस्य मनःप्रीणनाय एतद्ग्रामस्था विपश्चितो महान्तो गृहस्था याजुषोपाकर्मदिनात्परस्मिन्दिने श्रावणमासे प्रत्यब्दं महत्या श्रद्धया दशदिनावधिकमेतं शिक्याघातमहोत्सवं साघोषं प्रवर्तयन्ति । तत्रैवं महोत्सवक्रमश्च कर्णाकर्णिकया मया श्रुतपूर्वोऽस्ति ॥

कपिमुनिवरगोत्रोद्भूतनारायणाख्य-
द्विजवररचिते श्रीकृष्णशिक्योत्सवेऽस्मिन् ।
हरिचरितनिबन्धे ह्यादिमाश्वास एवं
विरतिमगमदेष श्रीधरानुग्रहेण ॥ १११ ॥

इति श्रीनारायणकविविरचिते शिक्योत्सवप्रबन्धे

प्रथमाश्वासः समाप्तः ।



# द्वितीयाश्वासः ।



पृथ्वीभारनिवृत्तये यदुकुले जातस्य लक्ष्मीपते-
र्यत्काळीयफणीन्द्रगर्वहरणाद्गोगोपसंप्रीणनम् ।
तद्दिव्यं चरितं महीसुरवरा दिव्यालये श्रीपते-
रग्रे चादिमवासरेऽतिमधुरं संकीर्तयेयुर्मुदा ॥ १ ॥

द्वैतीयीकदिने च नन्दभवने संवर्धनं श्रीपतेः
कंसप्रेरितया बकावरजया स्तन्यप्रदानं छलात् ।
तस्या अप्यपवर्गदानमपि यद्वृन्दावनान्ताश्रयं
दुष्टाघासुरसूदनं च चरितं तत्कीर्तयेयुर्द्विजाः ॥ २ ॥

तृतीयदिवसेऽमराधिपतिदर्पसंशान्तये
महीधरविधारणात्कृतवता गवां रक्षणम् ।
कृतं भगवता च यन्निखिलगोपसंप्रीणनं
तदत्र चरितं हरेः सदसि कीर्तयेयुर्द्विजाः ॥ ३ ॥

तुरीयदिवसे हरेर्व्रजविलासिनीनां च य-
त्समन्दहसितेक्षणं सुमशरासनोद्दीपनम् ।
बभूव सुरमोहनं सरसरासलीलायितं
तदेतदतिमञ्जुळं सदसि कीर्तयेयुर्द्विजाः ॥ ४ ॥

दुर्दान्तदुर्मददुराग्रहदुष्टदैत्य-
वंशोद्भवं शठमतिं विनिहत्य कंसम् ।
यद्यादवान्समतनोद्धरिराप्तमोदान्
तत्पञ्चमेऽह्नि चरितं कथयेयुरार्याः ॥ ५ ॥

षष्ठे च दिने स्वमदोद्रेकेण भगवन्महिमातिशयं विज्ञातुकामेन गोपवत्सादिकमपहृत्य तमोमोहितचेतसा कमलभवेन वर्षं यावन्निजभवनास्थितवता पश्चात्तन्निरीक्षणायागत्य तादृशगोपवत्सादिभिरेव सार्धं तस्मिन्नेव बृन्दावने यथापूर्वं विहरन्तमम्बुजलोचनमविकृतात्मभावं सर्वेश्वरं श्रीधरं समीक्ष्य विस्मयाविष्टचेतसा विगळितनिजमदमोहेन साष्टाङ्गपातं सभक्तिप्रकर्षं भगवन्तं श्रीकृष्णं प्रणम्य 'अयि भगवन् वासुदेव, त्वमेव अद्भुताविचिन्त्यमहिमा निखिलमेतद्विश्वं सृजासि अवसि संहरसि च स्वात्मनैव । किंचास्मिन्नन्तश्चरन्नपि न लिप्यसे प्राकृतैर्गुणदोषैः । तं त्वामसक्तं भूतेषु मनसाप्यविज्ञेयमहिमानममलमानन्दमयमपरिमेयनिजमायानुभावमनन्तं वेत्तुमपारयन्तस्त्वदेकान्तनिहितनिजरूपगुणवृत्तयः सुरनरादयः सर्वेऽपि त्वन्मायावेशविवशहृदयाः अतादृश्यपि त्वयि समावध्नन्त्यात्मगुणानुगुणान्भावान् । केचिद्विलयमाशंसमानाः परस्मिञ्ज्योतिषि त्वामेव गायन्तोऽनवरतप्रसृतानन्दाश्रुकणकवचिततनवस्त्वय्येव रमन्ते । केचिन्नियमितनिखिलकरणग्रामा दुश्चराभिस्तपश्चर्याभिस्त्वामेवोपासते । केचित्सुदृढनिहितश्रद्धाभक्तिनिरताः समग्रैः सप्ततन्तुभिर्विविधैस्त्वामेवाभ्यर्चयन्ति ।

केचिदनुकलोपचीयमानदोषाध्मातमतयस्त्वामेव विद्विषन्ति । केचित्त्वय्येव समाबद्धदुर्वारवैरदूषितास्तुभ्यमभिद्रुह्यन्तो नाशयन्त्यन्यान् स्वयमपि नश्यन्ति । केचिदध्यारोपितानुबन्धपरिपोषप्रेमभरभरितानि मनांसि दधानास्त्वामेव मानयन्ति पूजयन्ति तर्पयन्ति लालयन्ति स्निह्यन्ति रमयन्ति स्वयमपि प्रीयन्ते । केचन मनुजेष्वन्यतमं त्वां मन्वानास्तटस्थतामुद्वहन्ति । केचन बलविक्रमैश्वर्यसाहसौदार्यादिषु त्वामेवाधिकं मन्वानास्त्वत्तो बिभ्यति । एवंविधाभिसन्धिबन्धुरचेतसा लोकेन संभाव्यमानो भवांस्तमात्यन्तिकेन श्रेयसा संयोजयति । न ह्यस्ति कश्चित्सर्वात्मनो भवतः सुहृद्बन्धुर्वा । लोके ह्यविद्याविलसनमहत्या अहंमत्या परिभूतहृदयो न जानाति परमं तत्वं भवतो यथाहम्' इति कृतां सर्ववेदसारमयीं ब्रह्मस्तुतिं विपश्चितो महान्तो देवालयान्तर्गतमुक्तामण्टपे सर्वतो मुक्तामणिमयतोरणसमलंकृतां विचित्रतरकञ्चुकक्षौमाम्बरविभूषणादिपरिलसितनिखिलजनप्रिय-दर्शनकनकमयपाञ्चालिकाकरधृतव्यजनत्वरसंचाल्यमानां मणिमयडोलामधितिष्ठतो भगवतो यदुपतेः पुरतः सानन्दं सम्यक्समुपनिवेदयेयुः ॥

सप्तमदिवसे गोपीवस्त्रापहृतिं समस्तजनहृद्याम् ।
भगवत्कलितां विबुधा निवेदयेयुर्निरन्तरा विष्णोः ॥ ६ ॥

दिनेऽष्टमेऽपि मेदिनीसरोजसंभवार्थितो
हरिर्दुरात्मदानवौघसूदनाय दीक्षितः ।

यदोः कुले चतुर्भुजोऽवतीर्य देववन्दितो
जगत्त्रयं ररक्ष यद्बुधा वदेयुरत्र तत् ॥ ७ ॥

नवमे दिवसे चायं शिक्याघाताभिनीतिकरणाय ।
शौरेर्धरासुराणामाघोषोऽस्मिन्प्रवर्तते ग्रामे ॥ ८ ॥

दशमे दिवसे शौरेर्भीष्मकतनयाविवाहशुभचरितम् ।
अतिमधुरं सदसि महीसुरवर्या वर्णयेयुरानन्दात् ॥ ९ ॥

सखे इतः पश्यतु भवानुद्यन्तं भानुम् ।

अरुणोष्णीषं दिवसक्षोणीभर्तुः सुरेशदिग्वध्वाः ।
काश्मीरचूर्णतिलकं दिनकरबिम्बं प्रकाशते प्राच्याम् ॥ १० ॥

प्रावृषेण्यदिवसेऽपि विवस्वान्स्वैः करैर्जलदवृन्दमपास्य ।
श्रीपतिप्रियकरं दिनमेतद्भासयत्यतितरामिति मन्ये ॥ ११ ॥

दिनपतिरपि शौरेः शिक्यघाताख्यलीला-
कलनमिह विधित्सुस्तद्दिनं चैतदद्य ।
निजकिरणसमूहैर्भासयन् राजतेऽसौ
भगवति निजसाह्यं नाचरेत्को जगत्याम् ॥ १२ ॥

तस्मादावां देवदेवस्य शौरेः
शिक्याघाताघोषणक्रीडनं तत् ।
क्षोणीदेवैः कल्प्यमानं निरीक्ष्य
प्राप्तानन्दौ प्राप्नुयाव स्वदेशम् ॥ १३ ॥

एवं संभाषमाणावेव गच्छन्तौ तद्ग्रामसंनिकर्षसमये द्विज-

वररूपं समासाद्य, मनोहररूपवेषभूषादिभिर्लोकोत्तरप्रवचनकौशलेन अनितरसाधारणसौन्दर्यादिना तेजस्वितया वैदुष्यसौजन्यसौमुख्यादिना च विस्मयाविष्टमानसैरतिथिजनसपर्याकरणश्रद्धालुभिः प्रणयपूर्ववचनवैदग्ध्यसंपन्नैर्ग्रामवासिभिस्तरुणद्विजवरैः सादरमाहूय स्वागतवचनादिना समुपचरितौ तैः सहैव समाकलितसह्यजासलिलावगाहनपरिपूतौ कृतयथोचितनिजाह्निककृत्यौ तौ किन्नरौ भगवदालयदर्शनसमुत्सुकमानसौ तैरेव द्विजवरैः सह तं ग्राममासाद्य सप्रश्रयसमर्पितरमणीयकदलीफलभक्ष्यपेयादिकं लघुप्रातराशं सप्रणयं स्वीकृत्य तानामन्त्र्य च प्रस्थाय भगवदालयसंदर्शनार्थं समागतं तत्र महाजनसंमर्दमपरिमितं विलोक्य विस्मयान्वितावभवताम् । ततश्च तदा सुमतिः सखायं सुगुणं समीक्ष्याब्रवीत्—सखे पश्यात्र भगवदालयपरिसरे श्रीवासुदेवसंदर्शनलालसतयाभ्यागतमतिमहान्तं जननिवहम् ॥

विष्णुप्रसादाप्तिसमुत्सुकानां
  नानादिगन्तादिह संगतानाम् ।
संमर्दमेतं विवरीतुमत्र
  शक्नोति गीर्वाणगुरुं विना कः ॥ १४ ॥

सप्तर्षीशस्थलवसतयो मातृभूतेश्वरस्थाः
  श्रीमायूराश्रयसुकृतिनो बिल्वकान्तारभाजः ।
श्रीमन्मध्यार्जुनकृतनिवासाश्च पृथ्वीसुरेन्द्रा
  द्रष्टुं शिक्योत्सवमिह हरेर्भक्तितः संमिळन्ति ॥ १५ ॥

श्रीवाञ्छस्थलनित्यवासरसिकाः पञ्चापगेशालय-
प्रान्तस्था अपि कुम्भघोणनिलयाः श्रीस्वामिशैलाश्रयाः ।
आयाता बृहतीश्वरस्थलजुषो राजन्ति चोळाङ्गना
ग्रामेऽस्मिञ्जगदीशितुर्यदुपतेः शिक्योत्सवं वीक्षितुम् ॥ १६ ॥

एवं तदा सुमतेर्वचनं निशम्य सुगुणः सर्वतो निरीक्ष्य तत्र जनसंमर्दे निरवधिकनकमयभूषणभूषितामतिमहार्घक्षौमाम्बरालंकृतस्वजनसमेतां विचित्रतरदुकूलकञ्चुकादिपरिधानशोभमानापघनां प्रियदर्शनां वनिताजनततिं वीक्ष्य सावहेलस्मितं—'सखे पश्येमां धनसमृद्धिमिव महाविभवशोभितां सर्वानवद्यलक्षणां सर्वाभरणभूषितावयवां भगवदुत्सवसमालोकनकुतूहलेन स्वमनोरथशतसंमार्जनैकतानमानसां विलासिलालसां विज्ञानवतीं, कशभरे कृष्णां, कर्णयोर्मणिकर्णिकां, कण्ठे मालिनीं, कुचकलशयोस्तुङ्गभद्रां, वाचि नर्मदां, संभाषणे प्रियंवदां, सुचरिते श्रुतकीर्तिं, वदनकान्ताविन्दुमतीं, रूपे सुरुचिं, स्वान्ते सुनीतिं, वपुषि सुभद्रां, सुकृतसंग्रहणे सुदक्षिणां, सपत्नीजनेष्वनसूयां, परिष्करणे भानुमतीं, प्रदाने यशोदां, स्वभावे शान्ताम्, अतिथिजनसपर्यासु कारुण्यवतीं, सर्वावयवेषु सुलक्ष्मीं, निजकान्तवशीकरणकर्मणि सुमनसम्, एवं प्रदर्शितविविधपुण्यापगासतीप्रभावां, केशेषु स्रग्धरां, विलासेषु ललितां, वीक्षणेषु हरिणीं, वचस्सु मञ्जुभाषिणीं, रूपेषु रुचिरां, स्वरेषु मत्तकोकिलां, नितम्बबिम्बेषु पृथ्वीं, वदनेष्विन्दुवदनां, गतेषु हंसीं, शीलेषु भुजगविलसितां,

रतिकरणेषु मत्तां, भूषणेषु कनकमञ्जरीं, मनोरथेषु भुजङ्गप्रयातां, यौवनेषु मदनार्ताम्, अभिलषितेषु दुर्लभाम्, आपातदर्शनेषु सुन्दरीम्, अवलोकनेषु तनुमध्यां, संनिकर्षोपगमेषु मानिनीम्, इति संदर्शितानेकवृत्तामपि दुर्वृत्तबहुळनिजजातिं, सन्ध्यामिव प्रारम्भदर्शितरागां, रतिमिव प्रद्युम्नानुरक्तां, स्फटिकशिलामिव प्रतिपुरुषरुचिं दधानां, जलूकामिव रक्ताकर्षणचतुरां, पयोधिवेलामिव प्रवालमणिभूषणां, दण्डकारण्यभूमिमिव चित्रकूटां, नौकामिव कलितानेकजनप्रतारणां, सरसीमिव भुवनमनोहरां, वैकुण्ठमूर्तिमिव घनपयोधररुचिराम्, अवगुणमणीनां रोहणस्थलीमिव, सुशीलस्य क्वचिज्जननभूमिमिव, सौभाग्यस्य कुलदेवतामिव, अनङ्गवेदाध्ययनस्य गुरुकुलमिव, अनाचारविषवल्लरीणामालवालभुवमिव, मारमहावीरस्य मनोरथसिद्धिमिव, विविधपुरुषकृतसुकृतविशेषस्य भागधेयपङ्क्तिमिव, निखिलयुवजनयौवनफलनिर्वेशशालां विश्वविक्षोभणसिद्धविद्यामिव पुष्पसायकस्य, अधिदेवतामिवादिमरसस्य, अधरोल्लासितामपि धरातलैकभूषां, सरस्वतीमिव तुषारकरगौरशरीरशोभमानां, तृतीयपुरुषार्थजन्मभूमिमनितरदेशसुलभदेहलावण्यसपदं भगवदुत्सवव्यपदेशसमायातां चोळदेशालंकारभूतां निखिलतरुणजनमानसाकर्षणीं समन्दहसितवचनवैभवामङ्गनाजनततिम् ॥

अद्यैव चोलवनिता निजदेशनाम
सार्थं विधातुमनसः सुगृहीतविद्याः ।

भूत्वा विचित्रतरवर्णदुकूलचोला-
नाबिभ्रते स्तनघटावरणाय विद्वन् ॥ १७ ॥

किंच—

सखे पश्यात्र मध्येऽग्रहारमास्थितस्य प्रावृषेण्यजलदस्येव प्रशमितनिखिलरजःप्रसरस्य भगवदालयस्य तत्संनिकर्षविराजमानदिव्योपवनस्य च सकलजनहृदयाकर्षकं रामणीयकम् ॥

उत्तुङ्गगोपुरलसत्स्फटिकावदात-
सालाभिराममतिमञ्जुळमण्डपान्तम् ।
गाङ्गेयकल्पितविमानमनर्घरत्न-
मुक्तामयावनितलं हरिवेश्म भाति ॥ १८ ॥'

इति निगद्य सुमतिर्भगवतो यदुपतेः श्रीवेङ्कटेशस्यातिरमणीयमालयं सख्या सहान्तः प्रविश्य समीक्ष्य च—'सखे पश्येदं भागवतजनहृदयमन्दिराभरणस्य सर्वोपनिषदामाश्रयस्य सर्वविद्यानामधिष्ठानस्य महामोहगहनदवदहनस्य संसाराकूपारचूषणकुम्भयोनेर्निरतिशयमाहात्म्यनिधेः श्रीमदिन्दिरारमणस्य अचञ्चलचञ्चलासनाथपयोधरव्यूहशङ्काकरकाञ्चनपाञ्चालिकानिकरपरिशोभितहरितमणिमयविमानशिखरमनोहर, शारदारविन्दबृन्दबन्धुरकळिन्दनन्दिनीह्रदसंदेहसंदायकपद्मरागरञ्जितसुरेन्द्रमणिगणखचितवितर्दिकाभिरामं निरन्तरनरङ्गदभङ्गुरोत्सवनटनरङ्गं समुज्ज्वलविविधमणिनिकरप्रत्युप्तगोपुराशिखरास्थितकनकमय-

सालभञ्जिकोत्तमाङ्गं कनकनिम्नगातटपरिसरभूषणायमानविप्रवराग्रहारमध्यकृतपरिष्वङ्गं समाकलितवन्दारुजनदुरितनिचयभङ्गं द्वारसमाबद्धवैजयन्तिकासमुच्छ्रयचुम्बितगगनगङ्गं वियन्नदीसलिलावदातकलधौतमयावरणशृङ्गं विविधानेकरत्नप्रभाव्यतिकरितमणिकुट्टिममहःपुञ्जपिञ्जरितपतङ्गं मृगाङ्कमणिमयमण्डपगतकनकपञ्जराधिवासमुहितमनोरमशुकशारिकागणक्रियमाणानवरतसमाकर्णितचरहरिकथाप्रसङ्गं, संनतसज्जननिगमहृदयान्तरङ्गं, महारण्यमिव बहुविद्रुमोपशोभितं, शारददिनमिव विरचितनिखिलपङ्कनिरसनं, प्रभाकरतेज इव निरस्ततमोविलसितं, निगमवच इवाशेषद्विजगणगीयमानप्रभावं, भगवद्रमारमणाधिवासधन्यं देवमन्दिरम् ॥

इदं विबुधसेवितं विनतवैनतेयान्वितं
मनोहरशिलातलं मणिगणैः समुद्भासितम् ।
सदा भगवदीक्षणत्वरितभक्तबृन्दोज्ज्वलं
विकुण्ठनिलयो यथा मदयतीह मे मानसम् ॥ १९ ॥

अत्र सखेऽवधेहि भगवदालयावस्थानप्रकारम् ॥

अष्टादशोन्नतमहिष्ठशिलानिबद्ध-
स्तम्भोज्ज्वलं गरुडमण्डपमेतदाद्यम् ।
अत्रैव भागवतभूसुरक्लृप्तशौरि-
नामानुकीर्तनचरित्रकथादिकं स्यात् ॥ २० ॥

द्विजविबुधनिषेव्यं सच्छिलास्तम्भयुक्तं
कनकखचितमेतन्मण्डपं पश्य चान्तः ।
मणिकटककिरीटस्वर्णहारादिदेवा-
भरणधरणधन्याः पेटिका यत्र भान्ति ॥ २१ ॥

मुक्तामण्डपमीषदुन्नततलस्तम्भैश्च षड्भिर्युतं
यत्रैते विजयो जयश्च भगवद्द्वाःस्थौ हनूमानपि ।
श्रीनारायणतीर्थसंयमिवरो गोपालनामा महा-
भागो यत्र हरिं नुवन्ति सुदिनेष्वासीत यत्नेश्वरः ॥

नवविधमणिसंघैश्चित्रितं हृद्यमन्त-
र्निखिलसुरनियन्तुर्देवदेवस्य विष्णोः ।
सततविहृतिधन्यं मण्डपं रत्नसंज्ञं
जलधिदुहितृदीप्रं गर्भगेहापराख्यम् ॥ २३ ॥

दीप्रेऽस्मिन्मणिमण्डपेऽतिविलसन्मुक्तासनस्थो हरिः
स्वाङ्कस्थां परिरभ्य वामकरतो गाढं सरोजालयाम् ।
रत्नोल्लासिकिरीटकुण्डलधरः पीताम्बरालंकृतो
मुक्ताकञ्चुकभृद्दयाजलनिधिर्भक्तान्सदा रक्षति ॥ २४ ॥

इतः पश्य बहिः—

विद्युद्वल्लीसुषमवपुषश्चोळनार्योऽतिशुद्धाः
संघीभूयालयभुवि हरेर्वेङ्कटेशस्य भक्त्या ।
नानावर्णा नयनसुभगा रङ्गवल्लीर्विचित्राः
प्राकारान्तर्विदधति महामण्डपे गारुडेऽस्मिन् ॥२५॥

इति निगद्य तदालयपश्चिमप्राकारप्रदेशं मित्रेण सह गत्वा पुरो निर्दिश्य—'पश्येदं चास्य भगवदालयस्य प्रतीचीभागे वर्तमानाद्भगवतः सुपर्णादिवाहननिवेशनार्थं रमणीयतया निबद्धाद्दृढशिलामण्डपात्परमुद्यानस्थमन्दारद्रुमादिसंसेचनार्थं दृढनिबद्धगभीरमहाकूपाच्च परम्, अस्पृश्यजनबाधानिवारणार्थं समन्ततोऽपि निबद्धयाऽतिदृढोन्नतेष्टकचितवृत्या विभूषितम्, अतिसुरभिळशीतळसरसदळपरिमळप्रसारणापनोदितनिखिलजनहृदयमलिनं, संततसंनिहितभगवदपाङ्गवीक्षणासङ्गधन्यं परिहसितचैत्ररथनन्दनवैभ्राजादिदेवप्रमदवनविभवमुपवनम् ॥

धरणेरसितातपत्रमेत-
  द्भ्रमराणां मकरन्दपानशाला ।
मदनस्य च विश्रमैकभूमिः
  पिकबृन्दस्य कलागृहं विभाति ॥ २६ ॥

पुंनागचम्पककदम्बककर्णिकार-
  श्रीखण्डकेसरशिरीषकपारिजाताः ।
जम्बूकपित्थपनसाम्ररसालसाल-
  बिल्वा विभान्त्युपवनं परितो मुरारेः ॥ २७ ॥'

इत्युक्त्वा तेन सख्या सह पुनरालयपुरोभागस्थगारुडमण्डपमासाद्य तत्र वीक्ष्य सखायमब्रवीत् ॥

नानाग्रामसमागता बुधवराः कौतूहलाभ्यागता
  दृष्ट्वा शौरिमहोत्सवं द्विजवरैः सज्जीकृतं भक्तितः ।

कस्तूरीघनसारचन्दनरसक्षौद्रादिवस्तूच्चयं
वीक्ष्यानन्दसमन्विता यदुपतिं वन्दन्त एते मखे ॥ २८ ॥

अत्र महाजनकृता देवस्तुतिः ।

शङ्खं चक्रं गदां च क्षपितरिपुमदां शार्ङ्गमप्यम्बुजं च
बिभ्राणं हस्तपद्मैर्मुनिवरनिवहैर्भक्तितोऽभ्यर्च्यमानम् ।
वेदौघैर्मूर्तिमद्भिर्विनुतगुणगणं श्रीधरासेविताङ्घ्रिं
श्रीवाराहाग्रहारास्थितमतिदयं वासुदेवं नमामः ॥ २९ ॥

धराविधातृशैलजेशवासवादिसंस्तुतं
सुरारिभारपीडितक्षितिस्थितौ च दीक्षितम् ।
सतां हिताय शूरसेनसद्मनि श्रियावृते
मुदा कृतावतारकं सदा भवाब्धितारकम् ॥ ३० ॥

अघौघशैलसत्पविं सनीरनीरदच्छविं
सचाटुसूक्तसत्कविं सदाशयाब्जिनीरविम् ।
प्रसूनमालधारिणं स्वयं भुदर्पहारिणं
पुनर्भवप्रमोचनं नमामि कञ्जलोचनम् ॥ ३१ ॥

वयस्यधेनुवत्सकान्मृतान्विषाम्बुपानतो
जीवयन्तमञ्जसा स्वसत्कटाक्षयोगतः ।
महोग्रकाळियोरगाधिपातिदर्पनाशकं
निपीतवन्यपावकं नमाम्यपूर्वबालकम् ॥ ३२ ॥

अकिंचनैकबन्धवे प्रपञ्चकार्यहेतवे
विरिञ्चिजन्मभूमये सदञ्चितात्मकीर्तये ।

कळिन्दनन्दिनीपयोविहारसक्तगोपिका-
दुकूलमोषचुञ्चवे नमोऽस्तु नन्दसूनवे ॥ ३३ ॥

अहो अत्रत्यभूसुरमाणवकानामपि भगवदुत्सवाघोषणे महानानन्दः संलक्ष्यते ॥

पश्य भूमिसुरबालका जनान्
कांस्यताळकरताळनिस्वनैः ।
श्रीपतेरिह महोत्सवो मुदा
वीक्ष्यतामिति निवेदयन्त्यमी ॥ ३४ ॥

तदत्र भगवान् स्वालयात्प्रतिष्ठेत ।

नानामौक्तिकतोरणादिलसितां क्षौमाम्बरालंकृतां
नव्यां शोभनदन्तिदन्तरचितां दिव्योपबर्हान्विताम् ।
सिंहाङ्कामधिरुह्य रत्नशिबिकां श्रीबालकृष्णः करे
धृत्वायं नवनीतहेमकलशं भूषोज्वलो यास्यति ॥ ३५ ॥

तदावां भगवदालयं प्रदक्षिणीकृत्यागच्छाव इत्युक्त्वा तेन सहालयं प्रदक्षिणीकृत्य समागत्य गरुडमण्डपं तत्र सखायं वीक्ष्य पश्य सखे—

छत्रचामरसेवितो नवनीतभाजनमावहन्
भूरिभूषणभूषितः सकलैर्जनैरभिवन्दितः ।
दिव्यसिन्धुरदन्तनिर्मितमास्थितश्चतुरन्तकं
यानमालयतः प्रतिष्ठत एष नन्दकिशोरकः ॥ ३६ ॥

अहो वेङ्कटेशस्यास्य उत्सवदिनेऽस्मिन्प्रातः सङ्गवकाल एव सकलजनाभिनन्द्यमानो द्विजवरप्रवर्त्यमानो दीर्घिकातटान्तं प्रति यात्राघोषः समानन्दकरः सर्वेषां प्रवर्तते । भगवांश्चालयात्प्रस्थाय स्वालयं परितः प्रदक्षिणमेकं प्रथमं विधायालयाद्बहिरागत्य ग्रामं संचरन्प्रतिगृहं तत्र तत्र द्विजवर्यैर्वन्द्यमानः सत्क्रियमाणः कर्पूरनीराजनादिभिः परितोष्यमाणश्च दीर्घिकातटान्तं प्रति प्रयाति ॥

विद्वन् पश्य प्रयान्तं तटरुहविलसद्दीर्घिकायास्तटान्तं
हस्तैर्हैय्यंगवीनं दधतमुरुतरोदारपद्मस्रगाढ्यम् ।
नानातोद्यादिनादैर्द्विजगणपठितैर्वेदघोषैश्च जुष्टं
सूर्यालोकद्विरुक्ताभरणगणरुचिं बालकृष्णं प्रसन्नम् ॥ ३७ ॥

केचिन्नामसहस्रकं मधुभिदः पार्श्वे पठन्ति द्विजाः
केचिद्वेदशिरांसि सुस्वरमिहोद्गायन्ति पश्चात्परे ।
पाराशर्यविनिर्मितं भगवतः प्रेमास्पदं मुक्तिदं
नॄणां भागवतं पठन्ति कतिचिद्गायन्ति गाथा हरेः ॥ ३८ ॥

इतीदं सुमतेर्वचनमभिनन्द्य सर्वं निरीक्ष्य सानन्दः सुगुणो देवालयात्प्रस्थितस्य भगवतो वासुदेवस्य दिव्यमूर्तिमभिवीक्ष्य परमानन्दभरितमनाः सुमतिनानुगम्यमानस्ततो जनसंमर्दरहितं प्रदेशं जिगमिषुर्भगवता सह किंचित्पुरतो गत्वा दीर्घिकापरिसरगतं निखिलजनविश्रमाय परिकल्पितं

शिलाबन्धवेदिकातलसंनिकर्षमासाद्य सुमतिमालोक्य—पश्येतोऽविदूरे महाजावराहाग्रहारयोर्मध्येपथं लघुसेतुबन्धपरिशोभमानां नातिप्रथीयसीं सक्थिदघ्नसलिलप्रवाहां दीर्घिकाम् । अस्यां ह्येतद्ग्रामवासिन्यः सुवासिन्योऽखिलाः प्रथमद्वितीयतृतीययौवनदशावत्यः स्त्रियः समागत्य निजाम्बरनिर्णेजननिमज्जनादिविविधविधेयकृत्यजालनिर्वर्तनावसरे सरसतरात्मपरदयितगृहकर्मविषयकसंभाषणविनोदनादिभिर्निजपरग्रामप्रवर्तिष्यमाणानेकपूर्वापरकर्मजालप्रवचनादिभिराह्निकजपकरणश्रद्धाच्छलेन तत्रत्यमण्डपगता वैदिकाग्रेसरा इव सुचिरं समयं यापयित्वा स्वगेहमाव्रजन्ति ॥

अस्यास्तीरेऽतिवृद्धाश्चलदळसुभगा दीर्घिकायास्त्रयोऽमी
नित्यस्नाताः सुशीतैर्मृदुपवनधुतैर्दीर्घिकाम्भस्तुषारैः ।
अश्वत्थास्तं मुरारिं मुनय इव महामौनमुद्रां भजन्तो
द्रष्टुं जाताभिलाषा इव निकटगतं छायया प्रीणयन्ति ॥३९॥

वराहपुरदीर्घिकातटगतं महामण्डपं
विचित्रमणितोरणैर्विविधवर्णपुष्पोत्करैः ।
परिष्कृतमिदं सदा सिकतिलस्थलं सर्वतः
शनैर्यदुपतिर्मुदा सरसमेति भूषोज्ज्वलः ॥ ४० ॥

अश्वत्थद्रुममूलगे मणिमये स्तम्भोज्ज्वले मण्डपे
तिष्ठन्तं नवनीलनीरदनिभं सुस्निग्धपीताम्बरम् ।
बालं कृष्णमुपासते हि बहवो नानाग्रहारागताः
सस्त्रीकाः कुसुमैः फलैर्नुतिशतैर्नागजनैर्वन्दनैः ॥ ४१ ॥

प्रवातसुभगे सदा सुमपरिष्कृते मण्डपे
स्थितं धरणिनिर्जरैः स्तुतनिजापदानं पुरः ।
समस्तजनमोहनोज्ज्वलतनुं रमावल्लभं
प्रपन्नजनवत्सलं मनसि भावये श्रीधरम् ॥ ४२ ॥

श्रीवासुदेव वरहापुरसंनिधान-
संतोषिताखिलमहीसुर देवदेव ।
शिक्यप्रहारमहवीक्षणलोलचित्त
श्रीकृष्ण भक्तजनरक्षक पाहि मां त्वम् ॥ ४३ ॥

जडभरत इवाहं प्रेमबन्धान्वितः सन्
सुतदुहितृकळत्रेत्यादिशब्दैकशेषे ।
सरस इव पदार्थे यापयन्नस्मि कालं
तदगतिमिह लक्ष्मीकान्त रक्षाश्रितं माम् ॥ ४४ ॥

इति सभक्तिकं दीर्घिकातटान्तगतमहामण्डपतलमधिवसन्तं श्रीकृष्णमभिवन्द्य स्तुत्वा च सानन्दं सुगुणः सखायं समतिमवादीत्—

पश्यैतं वासुदेवं मृदुहसितलसद्वक्त्रपद्मं सुनासं
काञ्चीकेयूरहाराद्यमलमणिगणप्रोल्लसच्चारुभूषम् ।
दिव्यस्रग्भिः समन्ताद्विलसितमसिताम्भोधरश्यामळाङ्गं
भक्तानामिष्टबन्धुं सरसिजनयनं दीर्घिकान्ते निषण्णम् ॥४५॥

काश्यपमुनिवरगोत्राद्भूतनारायणाख्य-
द्विजवररचिते श्रीकृष्णशिक्योत्सवेऽस्मिन् ।
हरिचरितनिबन्धे पूर्तिमागान्मुरारेः
सकरुणशुभदृष्ट्याश्वास एवं द्वितीयः ॥ ४६ ॥

इति श्रीनारायणकविविरचिते श्रीकृष्णशिक्योत्सवप्रबन्धे
द्वितीयाश्वासः समाप्तः ।



# तृतीयाश्वासः ।

इति तस्य सुगुणस्य वचनं सुमतिरभिनन्द्य सप्रमोदमखिलमभिवीक्ष्य दीर्घिकातटान्तगतमणिमण्डपकृतसंनिधानं भगवन्तं श्रीकान्तं प्रणम्य सप्रश्रयमेवमस्तौत ॥

## सुमतिकृतं श्रीधरस्तुतिदशकम्

कमललोचनं कम्बुकन्धरम्
कमलजेडितं काङ्क्षितार्थदम्
कमलया युतं कामसंनिभम्
कलभमुक्तिदं कृष्णमाश्रये ॥ १ ॥

गरुडवाहनं गानलोलुपम्
गुरुगदापहं गोपनन्दनम्
गुरुजनप्रियं गुप्तवैभवम्
गरळनाशनं गादिनमाश्रये २ ॥

चलितकुन्तलं चाटुवाक्प्रियम्
चलितकुण्डलं चारुमूर्तिकम्
चतुरभाषिणं चारणेडितम्
चकितदानवं चक्रिणं भजे ॥ ३ ॥

जननवाजत जाड्यनाशनम्
जलरुहेक्षणं जप्यनामकम्
जनिजरापहं जाम्बवत्प्रियम्
जलदविग्रहं जालिनं भजे ॥ ४ ॥

तरणिमण्डले तजसान्वतम्
तपसि तत्परं तुङ्गनासिकम्
तनुतरोदरं तोषदं सताम्
तनुबलप्रदं तापहं भजे ॥ ५ ॥

निखिलदेहगं नीरदाकृतिम्
निरयनाशकं नामगायिनाम्
निगमपालकं नित्यनिर्वृतम्
नरसखं भजे नन्दनन्दनम् ॥ ६ ॥

मदनसुन्दरं मान्यचेष्टितम्
मुरळिवादकं मोहनाशकम्
मधुनिषूदनं मुक्तिदायकम्
मधुरभाषिणं माधवं भजे ॥ ७ ॥

यतिजनप्रियं योगिचिन्तितम्
यमभयापहं यज्ञरूपिणम्
यजनदैवतं योगसाधकम्
यदुकुलोद्भवं योगिनं भजे ॥ ८ ॥

सुरमुनिप्रियं सूरकन्यका-
सिकतिलस्थले स्वैरवासिनम्
सुहितमात्मना सर्वसाक्षिणम्
सुरपतीडितं सत्पतिं भजे ॥ ९ ॥

सुमतिदायकं सात्वतां पतिम्
सुतसुखप्रदं सारसाननम्
सुजनवत्सलं सूरिसंनुतम्
सुरनरेश्वरं सर्वगं भजे ॥

एवं भगवन्तं स्तुत्वा सुमतिः सुगुणं विलोक्य—सखे दिव्यमङ्गलमूर्तेश्चिदानन्दमयस्य रमापतेः समालोकनलाभभागधेयेनात्रत्यभक्तवरातिथिजनसपर्याकरणबद्धश्रद्धावनीसुरम्मादरममाकलितसत्क्रियाभ्यवहारलाभसंजातसंमोदातिरेकेण चातिक्रान्तः कालो नाज्ञायत । यदिदं गगनतलमतिनिर्मलमपि सांप्रतं जलधरपटलावृतं प्रदृश्यते, निखिललोकप्रकाशकोऽपि भगवान् सहस्रदीधितिः कुत्राप्यन्तर्हित इव लक्ष्यते । तन्मन्येऽद्य किंचिद्वृष्टिरापतिष्यतीति । यतः पश्यैतन्नभःस्थलम् ॥

संवृण्वते जलधरा गगनं समन्ता-
त्सर्वत्र विद्युत इमा असकृत्स्फुरन्ति ।
चक्षुःस्थितिश्च विफलाद्य नृणां जगच्च
गाढान्धकारजलधौ विनिमज्जतीव ॥ ११ ॥

एते मयूरा घनगर्जितेन
हृष्यत्कलापा भगवन्तमेतम् ।
नवाम्बुदश्यामलकोमळाङ्गं
संवीक्ष्य नृत्यन्ति च दीर्घिकान्ते ॥ १२ ॥

अघार्तराष्ट्रसंहतिं वितन्वता भुवं सखे
कृतार्जुनप्रमोदकेन भूभृदङ्कशायिना ।
मदा गदावघातिनीं दशां च बिभ्रतामुना
घनोदयेन भीमसेनवद्विजृम्भ्यतेऽधुना ॥ १३ ॥

एषा बलाकाततिरन्तरिक्षे
पार्श्वद्वये पङ्क्तिश उद्व्रजन्ती ।
इतो यियासोर्निलयं मुरारे-
र्बद्धेव मुक्तामयतोरणस्रक् ॥ १४ ॥

प्रचलिष्यति नैजधाममूर्ति-
र्भगवान्संप्रति मन्दिरं स्वकीयम् ।
इति मेघततिर्विचिन्त्य नूनं
क्षितिमद्यातनुत प्रशान्तपांसुम् ॥ १५ ॥

अहो क्षणेन वात्याकुलीक्रियमाणा वृष्टिः समशाम्यत् ॥

गगनमिह समन्तान्निर्मलं सज्जनानां
मन इव तपनोऽयं संहरन् रश्मिजालम् ।
अपरजलधितोये लीयते मेघमाला-
कृतनिकृतिपरीतः शिष्टवल्लज्जमानः ॥ १६ ॥

भास्करोऽपि भगवत्क्रियमाणं
शिक्यघातमधुनेव दिदृक्षुः ।
जातवेदसि निधाय धुरं स्वां
विश्रमाय चरमाचलमेति ॥ १७ ॥

गतवसुरहमस्मि साम्प्रतं मे
नहि भुवने क्षममीदृशस्य वस्तुम् ।
इति किल हृदि चिन्तयन् दिनेशो-
ऽप्यहह विदेशमुपैति खिन्नचेताः ॥ १८ ॥

वासराधिपतिरेष मेदिनीं
तर्पयन्नपि निजैर्वसूच्चयैः ।
स्वीयमस्तमपनेतुमक्षमो
भाति कालगतिरीदृशी भुवि ॥ १९ ॥

पानेन हीनमधु पङ्कजजालमद्य
हित्वा मधुव्रतगणाः कुमुदानि यन्ति ।
तेऽन्ये हि मित्रनिवहा भुवि न त्यजेयु-
र्ये स्वेष्टदं हितजनं विभवात्ययेऽपि ॥ २० ॥

वासरोऽयमिह कोकखगानां
पुण्यराशिरिव तानवमेति ।
भास्वता सह शनैर्भुवि को वा
मित्रसाह्यविरहे मुदमृच्छेत् ॥ २१ ॥

संध्यानुरक्ता दयितं दिनेशं
देशान्तरं यान्तमनुव्रजन्ती ।
तस्मिन्क्रमादक्षिपथं व्यतीते
स्वयं परावर्तत सानुतापा ॥ २२ ॥

रागवन्तमपि वासराधिपं
संनिकृष्टमवधूय पश्चिमा ।
दिक्तमश्चयमुपैत्यहो जडं
निर्विवेकहृदया हि योषितः ॥ २३ ॥

कान्तां पङ्कजिनीमनन्यशरणां निर्दोषरागामिमां
हित्वाश्लेषणसस्पृहां रविरसौ कामी यथान्यां स्त्रियम् ।
आसाद्य स्ववस्त्रचयापहरणव्यग्रां दिशं वारुणीं
सन्ध्यारागमिषेण शोणवसनेनाच्छाद्य तां चुम्बति ॥ २४ ॥

भानावुन्नतपश्चिमाचलतटादम्भोनिधौ मज्जति
प्रोद्गच्छज्जलशीकरास्तत इतो व्याकीर्णभावं गताः ।
तारात्वं प्रतिपद्य भान्ति नळिनीपत्रोपमे व्योमनी-
त्याशङ्के धवलाः समस्तजनताहृद्याश्च मुक्ता इव ॥ २५ ॥

एते केचन भूसुराः सिकतिलन्यग्रोधमूले स्थिता
भस्मालेपविभूषिताळिकतटाः सायं जपन्त्यादरात् ।
देवीं तां त्रिपदां सहाङ्गकरविन्यासां यथावत्परे
पञ्चाष्टाक्षरशंभुविष्णुकवचस्तोत्रादिकं भक्तितः ॥ २६ ॥

कावेरीनिर्मलाम्भश्शिशिरतरतुषारौघसंपर्कशीता
मल्लीवासन्तिकादिप्रमुखवरलतासूनसौगन्ध्यहृद्याः ।
एते श्रीकण्ठबिल्वद्रुमनिवहसमासङ्गभान्द्योपपन्नाः
सायंकालीनवाता निखिलसुखकरा दीर्घिकान्ते प्रवान्ति ॥

एते च पक्षिनिवहा निजवासवृक्षा-
नाराद्व्रजन्ति शतशो रजनीमुखेऽद्य ।
एते च भूसुरसुताः कतिचिच्च सायं
सन्ध्यामुपासितुमिह प्रचलन्ति शीघ्रम् ॥ २८ ॥

उपगतवति नैजं धाम विश्रान्तिहेतो-
रशिशिरकरभूपे ध्वान्तचोराभिभूतम् ।
अवति जगदिदानीं तद्वयस्यः कृशानु-
र्बहुविधलघुदीपच्छद्मना राजहीनम् ॥ २९ ॥

सखे पश्यैते प्रौढभूसुरा ग्रामाधिवासिनो निर्वर्तितसायाह्निकक्रियाकलापा दीर्घिकातीरविराजमानमहामण्डपवलयमधिवसन्तं भगवन्तं श्रीकृष्णं साष्टाङ्गपातं प्रणम्य निजग्रामवीथ्यां शिक्याघातविनोदाकलितमहोत्सवनिरीक्षणार्थं वीथीसंचरणेन तत्तत्प्रदेशपवित्रीकरणार्थं च सभक्तिकं प्रार्थयन्ते ॥

आयाहि श्रीपते त्वं निजभवनसमीपस्थमुक्ताचतुष्के
रम्भास्तम्भादिदीप्रे विविधमणिगणप्रोल्लसद्वेदिमध्ये ।
स्थित्वा शिक्यप्रहारादिकविहृतिमिमां गोपवेषैर्द्विजौघै-
रारब्धां वीक्ष्य तुष्टो निजनिलयगतः पालयास्मान्प्रपन्नान् ॥

मल्लिकाकुसुमसंततिमाध्वी-
मत्तभृङ्गरवकाहळघोषः ।
मन्दवातमददन्तिविहारी
मान्यतेऽद्य मदनो महिळाभिः ॥ ३१ ॥

पश्य त्वं दीर्घिकायास्तटभुवि कतिचिद्ग्रामवासिद्विजेन्द्रा
दध्यन्नं सोपदंशं सुरभिळतिलतैलाक्तचित्रौदनं च ।
मुद्गान्नं चाज्यसिक्तं रसवदिह धरानिर्जरेभ्यो गुडान्नं
बालेभ्यश्चागतेभ्यः प्रददति मुरजित्प्रस्थितौ यावदिष्टम् ॥

इतश्चापरग्रामसमायाता बालकाः सर्वे द्विजाश्चात्र दीर्घिकातटे पर्याप्ततया वितीर्णं विविधौदनमुपभुज्य सुखिता दीर्घिकासलिलैः प्रक्षाळितमुखपाणिपादाः प्रस्थानोद्यतस्य भगवतः समीपमुपयान्ति । तस्मादावामपि दीर्घिकायामस्यामेव विधिवन्निर्वर्तितजप्यादिकौ इतः प्रस्थास्यमानभगवद्यात्राघोषदर्शनसुखमनुभवाव इति समामन्त्र्य कृतयथोचितनिजाचारौ तदात्वे तदग्रहारे धार्मिकातिथिजनसपर्यावत्सलद्विजवरप्रार्थनया समाकलितस्वादुतमाभ्यवहारताम्बूलचर्वणमलयजरसानुलेपनमाल्यस्वीकरणादिकौतुकौ भगवदालोकनकुतूहलान्मित्रतामुपगतैस्तत्रत्यैः समानवयस्कैः कतिपयैर्भूसुरतरुणैः सह दीर्घिकातटान्तं पुनरप्यासाद्य तत्र ततो ग्रामवीथीसंचरणाय प्रतिष्ठमानं बहुविधवाद्यघोषसमानन्दितागन्तुकजनसार्थहृदयसंतोषणं, प्रभाकरमविद्यातमसः, कुठारं विषयतृष्णाविषवल्लरीणां, यज्ञफलं यज्वनां, शब्दार्थरूपं कवीनां,

कारणं कारणानां, वसन्तमिवाभिवर्धितबहुसुमनोविकासं, शरत्समयमिव विरचितपङ्कनिरसनं, दुर्भरधराभारावरोपणाय धर्मस्थापनाय ब्रह्मकोशगुप्त्यै साधुसंरक्षणाय निजपादकमलभक्तजनपालनाय च यदुकुले समवतीर्णं, सर्वोपनिषदां सारभूतं पुराणपुरुषोत्तममनर्घरत्नद्युतिपटलजटिलमकरकुण्डलमण्डितगण्ड - मण्डलं सौदामिनीसमुन्मेषसोदरपीतवासःपरिवीतप्रतीकसमुज्वलद्रत्नखचितकाञ्चीदामदृढावबद्धकटितटम्, आनन्दयन्तं निखिलजनमनांसि, मोहयन्तं मुनीनपि, भुवनातिशायिना रूपेण आप्याययन्तमखिलजनलोचनानि, अपरिच्छिन्नाप्रमेयनिजशक्तिमाश्रितजनरक्षणदीक्षितकरुणार्द्रमनोवृत्तिमभिनवपरिकल्पितवेषभूषणादिसमुज्वलं देवदेवमिन्दिरारमणमभिवन्द्यामन्दानन्दपरवशावभवताम् । (दीर्घिकातटान्तान्निजभवनं प्रति प्रतिष्ठमानं भगवन्तमभिवीक्ष्य) सुगुणस्तदा वयस्यमवादीत् ॥

पद्मचम्पकमल्लिकातुळसीशिरीषकमाधवी-
पारिजातकदम्बकैतकपुष्पगुम्भितदामभिः ।
भूषितोऽखिलमोहनानघमूर्तिरेष रमापति-
र्दिव्यभूषणभूषितश्च निजालयं प्रति गच्छति ॥ ३३ ॥

केचित्स्कन्धेन विष्णोः पदकमलयुगन्यासधन्यं च हैमं
सर्वत्र स्रग्विभूषाम्बरवरविहितं पीठमत्रावहन्ति ।
केचिन्मुक्तातपत्रं कनकमयशलाकाप्रवाळाभदण्डं
केचिद्रत्नप्रदीप्रत्सरुकमुभयतश्चामरं वीजयन्ति ॥ ३४ ॥

केचिद्भूसुरबालका मुररिपोर्यात्राक्षणे दीपिका
यष्ट्यग्रज्वलिताः सुगन्धिघृतसंसिक्ता मुदा बिभ्रते ।
अन्ये केचन कांस्यताळमहिता नामानि लक्ष्मीपते-
र्गायन्तः प्रचलन्ति वर्त्मनि परे वन्दन्त एते हरिम् ॥३५॥

केचिद्द्विजातितनया घृतपूर्णपात्रं
धृत्वा करे प्रतिपदं करदीपिकानाम् ।
प्राज्यैर्घृतैरपरबालकहस्तगानां
सेकं मुदा विदधते भगवत्प्रयाणे ॥ ३६ ॥

ऋग्भिर्यजुर्भिरपि सामभिरत्र विष्णुं
पश्चाच्च पङ्क्तिश इमे प्रणुवन्ति विप्राः ।
गायन्ति दिव्यचरितानि च कांस्यताळ-
हस्ताश्च भागवतविप्रवराः पुरस्तात् ॥ ३७ ॥

सखे पश्य अत्रत्याद्भुतमिदं यदत्र निखिललोकपावनचरितस्य निजवदनशारदारविन्दनन्दितजलधिनन्दिनीनयनचञ्चरीकस्य भुवनत्रयनळिननिर्माणनवबिसाङ्कुरस्य निखिलश्रुतिगणविनुतमहिम्नो भगवतो वासुदेवस्य दीर्घिकातटान्तात्प्रस्थानानुपदमेव पश्चाद्भागे दुर्वारासहनीयविविधनिजामयापनोदनसिद्धये कृतनिजसंकल्पा नानाग्रहारेभ्यः समायाता अत्रत्याश्च केचिन्महीसुरा भक्तिपूर्वकमस्मिन्दिने कृतोपवासा दीर्घिकासलिले सायं समवगाहनार्द्रवसनपरिवीतशरीरा एव सन्तो भगवन्नामसंकीर्तनमाचरन्तो भगवत्प्रसादसिद्धये क्षोणीपृष्ठसमाकलिताङ्गप्रदक्षिणाविधयः

प्रतिपदं गोविन्द गोविन्द गोविन्देति भगवतो नामकीर्तनं गम्भीरतरमातन्वानाः सभक्तिकं भगवत्स्वरूपानुसंधानमनुपजातपरमानन्दाश्रुकणकबचिततनवो धरण्यां विलुठनपूर्वकं सुरभिळहरिद्रानुलेपनसमुल्लसद्दिव्यनारिकेळफलविलसत्करकमलाबद्धाञ्जलिपुटा भगवन्तमनुयान्ति । सर्वथा त एव प्रशस्यतमजन्मानः कर्मभूमावस्यां यैः पुण्यश्लोकस्य भगवतो विष्णोर्नामकीर्तनं विना क्षणलवोऽपि व्यर्थतां न नीयते, यैश्च चिन्त्यतेऽनवरतं मुरारिमहिमा; श्रूयते च सततमपरिच्छिन्नानन्ददिव्यशक्तेर्मायामानुषभावमलकुर्वतो माधवस्य पुण्यचरितं, कीर्त्यन्ते चाखिलदुरितनिरसनपटीयांसो निखिलगदसङ्घवशाटवीदवदहना भगवतो गुणगणाः । यतो निरस्तत्रैगुण्या अपि शुद्धसत्वप्रकृतयः समतिक्रान्तविधिनिषेधा महान्तो मुनयोऽपि भगवतः कथाभिरेव रमन्ते । तादृशाप्रमेयमहिमानमखिलभुवनबन्धुमपारकरुणासिन्धुमेनं वासुदेवं भक्तितः प्रपन्नानामेषां भूसुराणामेवंविधं भूतलाङ्गप्रदक्षिणीकरणं सकलामयौघविदळनं निखिलाभीष्टवितरणसमर्थं चेति पश्यतां केषां वा जनानां मतिर्मनसि न स्फुरेत्, केषां वा नाविर्भवेद्भगवति रमारमणे विश्वंभरेऽस्मिन् सुदृढा भक्तिश्च

**एते नानाग्रहारागतधरणिसुराः प्रार्थयन्तोऽनुवेलं**
**दुर्वारात्मीयरोगापनयनममले दीर्घिकावारिपूरे ।**
**सायं स्नात्वा विशुद्धा यदुकुलनृपतेः प्रस्थितौ भक्तिपूर्वं**
**पश्चाद्भागे लुठन्तो विदधति भगवन्नामसंकीर्तनानि ॥३८॥**

निष्पन्दत्वं जनानां रजनिमृगदृशः संभ्रमं दिग्वधूनां
कम्पं योगीश्वराणां परमरसमयीं भावनामन्तरङ्गे ।
कुर्वन्नेतैर्हि भक्त्या धरणितललुठद्गात्रकैर्विप्रवर्यै-
रुद्घुष्टो निस्वनोऽयं विलसति भगवन्नामसंकीर्तनोत्थः ॥३९॥

ततश्च सुगुणस्यैतद्वचनं निशम्य सुमतिः—वयस्य पश्य भूतलविलुठनपरा भूसुराः केचित् पद्यमयीं भगवत्स्तुतिमाचरन्तो भगवन्तमनुयान्ति ॥

स्वामिन्हे वेङ्कटेशाखिलभुवनपते सर्वरोगापहारिन्
गाङ्ग्याङ्कृतरक्षावलयधरणतो मच्छरीरस्थरोगाः ।
सर्वे शाम्यन्तु शीघ्रं वरद तव दयावैभवाद्दीनबन्धो
सौवर्णं हस्तरक्षावलयमिदमहं त्वत्पदाब्जेऽर्पयेयम् ॥ ४० ॥

वेदंवेदं जनिमृतिभवं क्लेशजातं प्रपञ्चे
नामंनामं यदुपतिपदाम्भोजयुग्मं च नित्यम् ।
वीक्षंवीक्षं त्रिभुवनपितुर्मोददां मूर्तिमेते
गायंगायं हरिगुणगणान्सार्थयन्ति स्वजन्म ॥ ४१ ॥

चारंचारं प्रतिदिनममी मन्दिरं कैटभारेः
कारंकारं प्रणतिमसकृत्पादपाथोजयुग्मे ।
स्मारंस्मारं भुवनविनुतं देवदेवस्य रूपं
वारं वारं क्षितिसुरगणा यापयन्ति स्वकालम् ॥ ४२ ॥

सखे पश्यैतदग्रहारसंनिकर्षे भगवदागमनसमये निखि-

लजननयनासेचनकं प्रतिगृहं भूसुरक्रियमाणं परिष्कृतिवैभवं भगवद्विषयकं कैङ्कर्यं ब्राह्मणीजनानां च भगवदालोकनविषयिकां कुतूहलितां च ॥

पश्यास्मिन्नग्रहारे प्रतिभवनमहावेदिकं ब्राह्मणीभि-
 र्भक्त्या श्रीकृष्णतोषावहदिनमित्युत्थितानन्दमेते ।
प्राज्यैराज्यैः सुपूर्णा बहिरिह विहिता भद्रदीपा मनोज्ञाः
 सार्कं सत्पूर्णकुम्भैर्मधुमथनसमायानकाले रजन्याम् ॥ ४३ ॥

मुक्तादामविभूषितं ध्वजपटं शौरेर्मुदा बिभ्रते
 केचिच्छ्रीपतिहेमदण्डमपरे हस्तेन संगृह्णते ।
केचित्प्रौढमहीसुराः प्रतिपदं मन्दं विहारो हरे-
 रत्रास्त्वित्यनुशासतीह धरणौ कैङ्कर्यकर्तॄन् जनान् ॥ ४४ ॥

तदा च सुगुणस्तन्निशम्य—सखे ग्रामवीथ्यां भगवदागमनसमयेऽत्रत्यवनिताजनानां ससंभ्रमं भगवन्निरीक्षणकौतुकाभिनिवेशमतिसरसं पश्यतु भवान् ॥

पश्य काचिदिह सुन्दरी हरेरागतिं गिरिशमन्दिरान्तिके ।
गीतवाद्यनिनदेन जानती द्वारदेशमुपयाति सत्वरम् ॥ ४५ ॥

प्रमिताक्षरा सह सखीभिरियं
 निजवल्लभस्य चरितं सुदती ।
कथयन्त्युपागमनमस्य हरेः
 सहसा विलोक्य बहिराव्रजति ॥ ४६ ॥

काचिदिन्दुवदना निजं शिशुं
प्राशयत्यमृतपायसं गृहे ।
वाद्यघोषममितं हरेस्तदा-
कर्ण्य डिम्भसहितैति गेहतः ॥ ४७ ॥

काचित्पङ्कजलोचना प्रणयतः प्राणेश्वरेणोदितां
दिव्यां धर्मसुतादिभूपतिकथामाकर्णयन्ती मुदा ।
रथ्यायां यदुपुङ्गवागतिभवं कोलाहलं शृण्वती
साकं स्वप्रियवल्लभेन सहसा द्वारान्तमागच्छति ॥ ४८ ॥

अक्ष्णोरञ्जनमाहितं प्रसृमरं घर्माम्बुभिः कार्यजैः
पश्येत्यालिगिरं निशम्य वदनं स्वीयं मषीदूषितम् ।
वीक्ष्यादर्शतले सरोजवदना काचित्परिष्कुर्वती
श्रुत्वा वाद्यनिनादमुत्सुकमना वेगादिहागच्छति ॥४९॥

वासन्तीसुमदामगुम्फनपरा काचिन्मृगाक्षी हरेः
श्रुत्वा वाद्यगभीरघोषमुदितानन्दा मुरारीक्षणे ।
आयातीह सलीलमर्धरचितां पुष्पस्रजं बिभ्रती
शौरिं द्रष्टुमभीष्टदाननिरतं द्वारप्रदेशं द्रुतम् ॥ ५० ॥

काचिद्रामा निजदुहितरं शिक्षयन्ती नवोढां
कान्तागाराश्रयणसमये भर्तृसेवाप्रकारम् ।
ज्ञात्वा देवागतिमिह बहिर्वेदघोषैर्दुहित्रा
सार्धं भक्त्या यदुकुलपतिं नन्तुमभ्येति शीघ्रम् ॥५१॥

काचिच्छ्वश्रूः कथितमसकृद्देहकृत्येष्वदाक्ष्यं
निध्यायन्ती व्यथितहृदया वाद्यघोषं गभीरम् ।
श्रुत्वा बाला जघनचपला तुङ्गवक्षोजभारा
क्रान्त्वा मन्दं मुखररशना याति गेहप्रतोळीम् ॥ ५२ ॥

शय्यागेहान्तरगतमहाभित्तिविद्योतमानं
राधाचित्तानुनयनपटोर्वासुदेवस्य रूपम् ।
वीक्ष्यैवं मां किमिति न पतिः प्रार्थयत्यादगादि-
त्येवं चिन्ताविवशहृदया काचिदायाति रथ्याम् ॥ ५३ ॥

स्नुषेयं साध्वीवोल्लसति च सदा भर्तरि दृढं
न धत्ते प्रेमापि स्वपिति दिवसे कृत्यविमुखी ।
मदाज्ञां नादत्ते परुषवचनैस्तर्जयति मा-
मिति श्वश्रूः काचिन्नमति हरिमेतां वशयितुम् ॥ ५४ ॥

यास्यत्येषा पतिगृहमितो मत्सुतात्पैरहोभि-
र्गत्वा कान्तं श्रुतधनयुतं तोषयेद्वात्मशक्त्या ।
संतुष्येद्वा निजपतिगृहे लब्धभूषान्नवस्त्रे-
त्येषा काचिद्धरिमिति मुहुर्नन्नमीति प्रगल्भा ॥ ५५ ॥

श्वश्रूर्मामसकृद्विनिन्दति महादुष्टेति गेहान्तरं
प्राप्य स्वीयगुणान्प्रशंसति न मामालोकते गुर्विणीम् ।
खिन्दे साहमिहत्यकृत्यनिचयं कर्तुं न शक्नोमि हे
स्वामिन्देव भवान्ममास्ति गतिरित्येका हरिं वन्दते ॥

वित्तमदमत्तमतिरस्ति मम भर्ता
दुर्विषयसक्तनिजचित्त इह पुत्रः ।
नैव गृहकर्मकरणेऽपि मम शक्ति-
र्देव दिश शक्तिमिति काचिदिह नौति ॥ ५७ ॥

कदा प्रपौत्रस्य विवाहघोषं
दृष्ट्वाऽनया संसदि वीक्ष्य पश्चात् ।
यायां दिवं कृष्ण मुदेति काचित्
वृद्धा हरिं नौति गृहीतयष्टिः ॥ ५८ ॥

काश्चिद्भक्तिदृढीकृताशयतया श्रीकृष्णसंदर्शने
सान्द्रानन्दभरा गृहात्मतनयाबन्ध्वादिकार्याहितम् ।
स्नेहं क्षुद्रमसह्यदुःखकरमित्यालोच्य देहस्मृतिं
हित्वा यान्तमभीष्टदं यदुपतिं ध्यायन्ति वृद्धाङ्गनाः ॥५९॥

समायान्तमेतं हरिं वीक्ष्य रथ्या-
मुखे विप्रकन्याः स्वसौधाङ्गणस्थाः ।
प्रसूनैः प्रवर्षन्ति भूपालवर्यं
मुदा पौरकन्या इवाचारलाजैः ॥ ६० ॥

केचिद्भक्ताः स्वगेहाङ्गणपरिसरे नाळिकेरं सुवर्णं
दत्वा कर्पूरनीराजनमपि विधिवच्छ्रीपतेः पादमूले ।
कृत्वा साष्टाङ्गपातप्रणतिमपि समुत्थाय देवप्रसादं
स्वीकृत्यावाप्तहर्षाः कृतहरिभजना देवमेवानुयान्ति ॥ ६१ ॥

केचिच्चन्दनमर्पयन्ति मनुजाः केचित्स्रजो मल्लिका-
जातीचम्पककुन्दकेसरमुखास्ताम्बूलवीटीः परे ।
अन्ये स्वागतवाचमासनवरं पानीयमत्रेतरे
खाद्यं सत्कदळीफलादिकमपि स्वाभ्यर्णगेभ्यः पृथक् ॥ ६२ ॥

अयि मित्र कथमत्र भगवति श्रीकृष्णे ग्रामवीथीमनुप्रविशति क्षणदायामस्यामयथापूर्वमतिभास्वरत्वं लक्ष्यते । ऊर्ध्वमवलोक्य सविस्मयबहुमानं सुमतिमालोक्य—सखे पश्यात्र यदेतेषां मुरमथनकरिष्यमाणशिक्याघातमहोत्सवसमुत्सुकमानसानां वियच्चराणामतिभासुरमणिगणाभिरामविमानवरमण्डलप्रभापुञ्जेन ग्रामवीथ्यामस्यां पूर्वाधिकमतिप्रकाशवत्त्वं जायते ॥

एते गन्धर्वविद्याधरसुरतरुणाश्चारणाः सिद्धसाध्याः
सार्कं स्वप्रेयसीभिर्यदुपतिविषयां काचिताघातलीलाम् ।
द्रष्टुं दिव्यं विमानं निजनिजमधिरुह्यापतन्तीति मन्ये
संमर्देनाप्यमीषां वियदतिविपुलं नैव पर्याप्तमेति ॥ ६३ ॥

उत्तुङ्गस्फटिकाश्मसौधविहृतिं कुर्वत्य एताः सखे
मुक्ताहारविभूषितस्तनतटाः काञ्चीलसन्मध्यमाः ।
उत्तप्तामलहेमतन्तुघटितक्षौमाम्बरालंकृताः
पश्यन्त्यत्र च चोळदेशवनिताः कौतूहलात्खेचरीः ॥ ६४ ॥

कुलाङ्गगुणवैभवैः सुललिताङ्गहारैर्वयं
समास्त्रिदशयोषितामिति वदन्ति काश्चित्स्त्रियः ।

प्रजाविरहिता इमा अमरयोषितः सर्वदे-
त्युदीर्य सुरसुन्दरीः परिहसन्ति चोळ्यः पराः ॥६५॥

महार्हमणिभूषणा विमलमाल्यदिव्याम्बरा
जराविरहिता अपि स्त्रिय इमा नृणां भीतिदाः ।
निमेषरहिता यतो निखिलदेवसाधारणा
इतीह विहसन्त्यमूः सुरवधूस्तरुण्यः पराः ॥ ६६ ॥

काश्चित्सौधतलास्थिता मलयजालेपोल्लसत्कन्धरा-
स्ताम्बूलद्विगुणारुणाधरदळाः साकूतदृग्विभ्रमाः ।
श्रीमन्माधवबाल्यदिव्यचरितालोकच्छलात्प्रेयसो
यूनः सस्मितहावभावमधुरं पश्यन्ति चोळाङ्गनाः ॥६७॥

आलोक्य चोळवनितावदनेन्दुबिम्बं
कन्दर्पवारिनिधिवृद्धिनिदानमेतत् ।
केषां मनःकुमुदकाननकोरकाणि
सम्यग्विकासमुपयान्ति न निर्जराणाम् ॥ ६८ ॥

इति निगद्यान्यत्र दत्तदृष्टिः—सखे, अत्रापि भगवदागमनसमये ग्रामे कतिपयभवनद्वारवेदिकायां काश्चिद्युवतयः श्रीकृष्णमागच्छन्तं भगवन्तमेवं प्रार्थयन्ते ॥

दीर्घायुष्ययुतोऽस्तु मेऽद्य तनयो विद्वान्धनी नीरुजो
भूमन्नाश्रितवत्सलादिपुरुष श्रीमदृगन्तेक्षणात् ।
तुभ्यं काञ्चनकङ्कणाङ्गदमणिमत्युत्तहारादिकं
पश्चाद्दापयितास्मि काचिदिति संतप्ता हरिं वन्दते ॥ ६९ ॥

प्रियो यातो गङ्गातटभुवमिहैकास्मि विवशा
सुतोऽपि द्रव्यार्थी भ्रमति परितो भूमिमधनः ।
अहो वात्यावृष्टिर्भवति न च मे जीवितकथा
हरे मां पाहीति प्रणमति परा कृष्णमबला ॥ ७० ॥

काले ये कुटिले पुरातनसदाचारान्विहायाधुना
सन्तोऽप्यन्त्यकुलोद्भवं च धनिनं गत्वोपजीवन्त्यहो ।
न स्वं धर्ममिहाचरन्ति न भवत्सेवां प्रभो श्रीपते
तादृङ्मानववल्लभा इति धिया नास्मानुदास्तां भवान् ॥७१॥

पाञ्चालीमनसः शुचं निरसितुं गत्वा च तत्संनिधिं
शीघ्रं प्राश्य च शाकमल्पमपि तत्तृप्तः स्वयं यो मुनीन् ।
दुर्वासःप्रभृतीनतर्पयदहो सर्वात्मकः पाण्डवा-
नप्याधान्मुदितान्स पातु हरिरित्येका हरिं वन्दते ॥ ७२ ॥

शिक्याघातविनोदवीक्षणपरः श्रीमान्यशोदासुतो
मन्दंमन्दमुपेत्य भूसुरवरग्रामस्य वीथीं प्रति ।
दिव्यक्षौमवितानशोभिविलसन्मुक्ताचतुष्के स्थितो
देवोऽयं हि दिदृक्षतेऽवनिसुरानाभीरवेषोज्ज्वलान् ॥ ७३ ॥

एवं ब्रुवत्यतिमुदा सुगुणे तदानीं
पूर्वाधिको विविधमङ्गळवाद्यघोषः ।
प्रादुर्बभूव सहसा तमसौ निशम्य
प्रोवाच मित्रसुगुणं सुमतिः समोदम् ॥ ७४ ॥

पूजकवैष्णववर्य इतोऽनुमतेन विभोर्हरिपादयुगं
हेममयं सितचामरयुग्ममुखैर्बिरुदैः सह बिभ्रदयम् ।
गोपकवेषधृतिस्थलमेत्य च सादरसत्कृतिसंमुदितं
गोपगणाग्रसरद्विजमानयतीह समं द्विजगोपगणैः ॥ ७५ ॥

गोपकुलाग्रसरद्विज एष हि मूर्ध्नि वहन्नवदुग्धभृतं
भाण्डवरं नवकेरयुतं जगतीप्रभवे कमलापतये ।
प्रावृतकम्बळयष्टियुतो वरकिङ्किणिमेखलया लसितो
मन्दमिहाव्रजतीश्वरनाम वदंश्च गभीरममेयमुदा ॥ ७६ ॥

पूजकवैष्णवकल्पितपुण्ड्रकशोभिललाटभुजांसगळा
मध्यतटे विरळातिदृढाहितचञ्चलकिङ्किणिदामयुताः ।
भूमिसुराः पृथुमेचककम्बलसंवृतमूर्धतला बहवो
हस्तधृतोन्नतयष्टय एत इहावसथाद्बहिराजिहते ॥ ७७ ॥

गोपवेषलसिता द्विजातयस्त्रिः प्रदक्षिणविधिं विधाय च ।
श्रीपतेरिह विधूय कम्बलास्तंन्वते प्रणतिपूर्विकां स्तुतिम् ॥

॥ गोपकृता भगवतः स्तुतिः ॥

कुन्दरदनमिन्दुवदनमन्दहसितमञ्जुळं
नन्दपशुपनन्दनमळिबृन्दविजयिकुन्तळम् ।
शिक्यनिहितदुग्धभरितभाण्डदळनलालसं
कालयवनकालमखिललोकपितरमाश्रये ॥ ७९ ॥

काचितभेदप्रेक्षणलोलं क्रतुकरमुनिगणगृहजनशुभदं
क्रौञ्चमहीभृद्वेधकशौर्यं सरसिजभववलरिपुमदहरणम् ।
देवकपुत्रीपुण्यविपाकं शमधनमुनिजनहृदयगमनघं
सज्जनमित्रं श्रीपतिमीडे श्रितवरवितरणसुरतरुमनिशम् ॥

प्राचीनैः सुकृतैरिहाखिलगुरो हे कृष्ण नः संचितै-
रेव त्वं नयनातिथीभवसि भूरक्षार्थमेतादृशीम् ।
मूर्तिं प्रापिथ संजहर्थ दनुजान्सुष्वप्थ शेषे प्रभो
तस्याथ त्वमशेषवाङ्मनसयोर्दूरे च तं त्वां भजे ॥ ८१ ॥

शिखिशिखण्डकमकरकुण्डलरुचिमनोहरकुन्तळं
भुवनपालनभवुककल्पनसुदृढभावनयान्वितम् ।
जगदनुग्रहकृतपरिग्रहविविधविग्रहमीश्वरं
नमत माधवममितसौख्यदमहितवर्गनिषूदनम् ॥ ८२ ॥

जनिमृतिपरिभवविदळनकृतिनां
शमदमनियमितनिजचलमनसाम् ।
अभिमतवितरणसकरुणहृदयं
प्रणमत मुररिपुमशरणशरणम् ॥ ८३ ॥

सुरसरिदभिमतसुतनुतचरणं
सुरपतिमदभरनिरसननिपुणम् ।
यदुकुलसरिदधिपतिसितकिरणं
प्रणमत मुररिपुमशरणशरणम् ॥ ८४ ॥

दिनकरहिमकरनेत्रसरोजं
दितिसुतभयकरचक्रसमेतम्
फणिपतिशयनगमादिममीडे
सुरमुनिनुतनिजवैभवमेतम् ॥ ८५ ॥

इन्दुमुखं कुन्दरदं चन्द्रकुलाब्धीन्दुं
नन्दगृहालिन्दचरामन्दमिलिन्दाभम् ।
मन्दहसानन्दितगोपालकसंदोहं
तं दुरितध्वंसकरं कंसरिपुं वन्दे ॥ ८६ ॥

जनितापहरं करुणारसदं
नतचातकतोषकरं सुभगम् ।
मुरजिन्नवनीरदमतिशुभदं
शरणं करवाम वयं सततम् ॥ ८७ ॥

स्वामिन्श्रुतिवाग्भिर्वेद्यं तव रूपं
ब्रह्माद्यमरौघैर्नित्यं स्मरणीयम् ।
मन्दाः कथमेते चित्ते कलयेम
श्रीमन्दययास्मान्रक्षागतिकांस्त्वम् ॥ ८८ ॥

इतीमे भगवन्तं स्तुत्वा कर्पूरनीराजनेनाभिमुखीकृत्य समोदं प्रचलन्ति ॥

पश्य तुष्टमनसो द्विजातयो हस्तयुग्मधृततुङ्गयष्टयः ।
उच्चवेणुवरातिर्यगाहितं काचितं प्रमथितुं चलन्त्यमी ॥ ८९ ॥

उत्तुङ्गं वेणुमादौ धरणितलगतं स्थापयित्वात्र पार्श्वे-
स्तन्मध्ये तिर्यगाबध्य च सलिलघटीयन्त्रवद्वेणुमन्यम् ।
तस्याग्रे भक्ष्यगर्भं बहुविधसुमनोदामसंशोभिताग्रं
शिक्यं बद्ध्वा च कश्चिद्धरणिसुरयुवा सूत्रधारो विभाति ॥

पश्यैतच्छिक्यमन्तर्निहितबहुविधास्वाद्यभक्ष्यौघराज-
त्तिर्यग्भूतस्य वेणोः शिखरभुवि समालम्बमानं च शश्वत् ।
क्षोणीदेवेन यूना नमितमथ समुन्नम्यमानं च दाम्ना
सर्वेषां मानवानां मन इव चपलं भाति सर्वत्र विद्वन् ॥

सर्वासु दिक्षु भ्रमदूर्ध्वगं च
भेत्तुं बलात्काचितमात्तदण्डाः ।
द्विजा युवानो धृतगोपवेषा
अमी यतन्ते युगपत्प्रहृष्टाः ॥ ९२ ॥

एतद्यथा काचितमात्तदण्डा
विप्रा न गृह्णीयुरिमे बलेन ।
तथातिचातुर्यबलेन सोऽपि
क्षोणीसुरस्तद्भ्रमयत्यजस्रम् ॥ ९३ ॥

सप्ताष्टा भूमिदेवाः प्रहिसलिलगता निर्भया हेमकुम्भान्
पाथोभिः पूरयित्वा निजसविधगतान्प्रापयन्तीह विप्रान् ।
ते चान्तःस्थापितायामतिविपुलदृढायामनिश्श्रेणिकायां
तिष्ठन्तस्तान्गृहीत्वा बहिरुदकघटैर्द्रोणिकां पूरयन्ति ॥९४॥

दण्डाघातेन शिक्यं प्रमथितुमभितो धावतश्चोर्ध्वनेत्रा-
नेतान्विप्रान्समीक्ष्य द्रुतमिह सलिलैः सेचनं कुर्वतेऽन्ये ।
एते संसिच्यमानाः प्रहरणविषये बद्धचित्ता द्विजेन्द्राः
सर्वं तं तोयवर्षं तृणवदिह समालोच्य दण्डान् क्षिपन्ति ॥९५॥

शिक्यं भेत्तुं यतन्ते द्विजवरतरुणाः पाणिगैरुच्चदण्डै-
रन्योन्यं घट्टयन्तो द्रुतगतिबलतो शिक्यिताघाततृष्णान् ।
कांश्चित्सिञ्चन्ति केचित्कलशगसलिलैर्मूर्धसु क्षोणिदेवा-
नेतेऽप्येताननादृत्य च भुजबलतः शिक्यहत्यै भ्रमन्ति ॥९६॥

कश्चिद्विप्रः काचितं भेत्तुकामो
दण्डं हित्वा सर्वदिक्ष्वप्यटित्वा ।
पश्चाद्दण्डेनैव भूयोऽभियुङ्क्ते
गत्वा गत्वा घट्टकुट्यां प्रभातम् ॥ ९७ ॥

संहत्य केचिदनिरूप्य च काचितं त-
द्दण्डैर्मुधा चटपटायितमाचरन्ति ।
मूढाः परस्य चरितान्यविलोक्य साक्षा-
द्वीक्ष्येव जल्पनपरा इव विद्वदग्रे ॥ ९८ ॥

ग्रामो हि रङ्गं धृतगोपवेषा
नटा इमे शिक्यहतिश्च दृश्यम् ।
सभाधिपः शौरिरसौ रसज्ञः
सभ्या बुधा दामधरश्च नेता ॥ ९९ ॥

भ्रमन्त एते मथितुं च शिक्यकं
कटिस्थलाशिञ्जितकिङ्किणीकाः ।
परस्पराघट्टितदण्डनादै-
र्दिगन्तराळं मुखरं वितन्वते ॥ १०० ॥

एवं सुमतिवचनमखिलं निशम्य निरीक्ष्य प्रमुदितः सुगुणः सविस्मयमन्यत्र दत्तदृष्टिः, विलोक्य च सखायम्— पश्यात्र निशीथेऽपि जागरूकाणामुत्सवनिरीक्षणव्यग्रमनसामष्टादशवर्षदेशीयानां भूसुरतनयानामद्भुतकरं क्रीडनकौशलम् । यदेतेऽप्यमीषां शिक्यभेदनोत्सुकधियां गोपवेषभृतां भूसुरतरुणानां मध्ये संगत्य प्रत्येकं चामीकरशृङ्खलधारिणः सन्तः सलिलैः शृङ्गाणि समापूर्य काचितमथनतत्पराणां महीसुराणामङ्गेषु सेचनं विदधते । किंचैतेषु केचिद्वटवः शृङ्गसलिलैरुत्सवसमालोकनाय देवालयोभयपार्श्वसंनिकर्षस्थितमहागृहमणिमयसौधतलमधिवसन्तीनां निस्संमर्दमवलोकयन्तीनामत्रत्यविनोदं वामलोचनानामङ्गान्यपि सिञ्चन्ति कौतुकात् । पश्यायं द्विजकुमारकाणां करधृतकनकशृङ्गमुखोद्गतः सलिलपातः कामुकवर इव कामिनीनामासां मिळिन्दकुलकाळिमानं तर्जयदळकाग्रमाकुलयन्, पङ्कजदळगर्वसर्वंकषाणि लोचनानि निमीलयन्, अवतंसीभूतानि कर्णोत्पलानि पातयन्, मधूककुसुमोपमानि कपोलतलानि चुम्बन्, बिम्बफलमदसर्वस्वहराणि रदनच्छदानि विशदयन्, कपोतरुतोपमेयानि सीत्कृतान्यसकृत्संजनयन्, अतिकठिनोत्तुङ्गगिरिशिखरसंकाशानि स्तन-

तटानि पुलकयन्, अतिसुरभीणि चालेपनानि परिमृजन्, कुटिलशशिकलासंनिभानि दयितकृतकरजपदानि प्रदर्शयन्, क्रमशः शृङ्गाररसमणिपेटिका नीवीर्विस्रंसयन्, बालपुळिनमण्डलप्रतिस्पर्धीनि जघनतलानि संस्पृशन्, अपरिमितप्रमोदावहो भवति ॥

तटिल्लता यदा स्फुरेत्तदा सुवृष्टिरापते-
दिति श्रुतिर्हि लौकिकी तटिल्लता इवासते ।
विनैव वृष्टिमङ्गना इमास्तयाद्य योजये-
महीति चिन्तयेव तच्छिरस्स्वपः किरन्त्यमी ॥ १०१ ॥

शृङ्गवारि वटवो महिळाना-
मङ्केषु कुतुकाद्विकिरन्ति ।
जानते न हि विवेकविहीनाः
क्लेशमत्र मनुजा अपरेषाम् ॥ १०२ ॥

दण्डाघातेन चैते सरभसमभिपत्योर्ध्वगं शिक्यभाण्डं
भित्त्वा दण्डान्विहाय स्वकरयुगळतस्तद्गृहीतुं च शिक्यम् ।
सर्वत्रापि भ्रमन्तो गुणधरपटुना नामितोन्नामितं त-
त्स्वीयोत्साहेन सर्वे युगपदिह समुद्युञ्जते भूमिदेवाः ॥१०३॥

दण्डान्विहाय खलु हस्तयुगेन शिक्य-
मेते ग्रहीतुमनसः परितो भ्रमन्ति ।
तान्वीक्ष्य दामधर एष च शिक्यमेत-
द्धस्तानवाप्यविधया चलयत्यजस्रम् ॥ १०४ ॥

हस्ताभ्यां परिगृह्य केचिदधुना शिक्यं बलाद्युक्तित-
स्तत्रान्तर्गतशष्कुलीशकलसंप्राप्त्यै निजानङ्गुलीन् ।
क्षिप्त्वामी शकलान्प्रगृह्य च निजान्हस्ताङ्गुलीन्कृच्छ्रत-
श्चादातुं बहिरत्र भूमिविबुधाः क्लिश्यन्ति पश्याखिलाः ॥

एवं कृच्छ्राद्यत्नमाधाय हस्ता-
नादायामी भूसुरास्तुष्टचित्ताः ।
हस्तस्थांस्तान्शष्कुलीसंघखण्डा-
नास्वाद्याथो कृष्णमेत्य स्तुवन्ति ॥ १०६ ॥

कपिमुनिवरगोत्रोद्भूतनारायणाख्य-
द्विजवररचिते श्रीकृष्णशिक्योत्सवेऽस्मिन् ।
हरिचरितमनोज्ञे पूर्णतामाप खेल-
न्मुररिपुशुभदृष्ट्याश्वास एवं तृतीयः ॥ १०७ ॥

इति श्रीनारायणकविविरचिते श्रीकृष्णशिक्योत्सवप्रबन्धे
तृतीयाश्वासः समाप्तः ॥

# चतुर्थाश्वासः ।

मायामानुषरूपभाक् त्रिजगतां नाथो रमावल्लभो
गोपानां वसतौ वसन्सुमधुरं बाल्यं वयो यापयन् ।
गोपीनां भवनेषु गूढनिहितं ह्यय्यङ्गवीनं हरं-
स्तृप्तो गोपगणाय मुक्तिमदिशद्यस्तं भजामो हरिम् ॥१॥

राधासक्तमनास्तदीयभवनं गन्तुं विचिन्त्य स्वयं
यो नीलाभवनं प्रविश्य शयने तां वीक्ष्य राधे कथम् ।
शेषेऽत्रेति वदंस्तया कुपितया शौरे न राधास्म्यहं
नीला खल्विति भाषितोऽभवदसौ पायाद्विलक्षो हरिः ॥

कामोऽयं भुवनैकसुन्दर इति प्रीत्यानिशं वल्लवी-
बृन्दैरेष पतिः श्रिया इति जनैरर्थार्थिभिः सर्वदा ।
देवः संसृतिसिन्धुतारक इति श्रेयोऽर्थिभिर्योगिभि-
र्भक्त्या सेवितपादपद्मयुगळो यस्तं भजामो हरिम् ॥ ३ ॥

ग्राहग्रस्तनिराशसिन्धुरवरारब्धस्तवाप्यायितः
पार्श्वस्थामपि पादपद्मवहनव्यग्रां विधूयेन्दिराम् ।
त्यक्त्वा यो भुजगेन्द्रमश्वमपि चाकर्षन्खगेन्द्रं ययौ
गोप्तुं तं गजराजमाश्रितवशस्तं देवमाराध्नुमः ॥ ४ ॥

जातीचम्पकमालतीतुळसिकामालासमुद्भासितं
राकाचन्द्रनिभाननं रतिपतेस्तातं रमावल्लभम् ।
रत्नोल्लासिकिरीटमम्बुजदृशं विद्योतिपीताम्बरं
देवं शङ्खगदासिपङ्कजधरं कृष्णं प्रपद्यामहे ॥ ५ ॥

त्रय्या मूर्तिजुषा निषेवितपदाम्भोजं द्वयोः पार्श्वयो-
र्भूम्या चेन्दिरया पुरो विनयिना नागान्तकेनान्वितम् ।
द्वारे भक्तिमता जयेन विजयेनासेव्यमानं मुदा
नागाधीशशयं कृपाजलनिधिं देवं समाराध्नुमः ॥ ६ ॥

निजोदरान्तरास्थितिं वितन्वतां सतां नृणां
प्रबोधनाय वक्षसा विशङ्कटेन कौस्तुभम् ।
मणिं दधानमन्यमुष्णदीधितिं किलोज्वलं
सदा कृपानिधिं भजामहे वयं रमापतिम् ॥ ७ ॥

स्वीयांघ्रिपद्ममधुपायितचित्तभक्त-
भूमीसुराभ्युदयदायिकटाक्षपातम् ।
नारायणाभिधमहीसुरवर्णितस्व-
शिक्योत्सवप्रमुदितं हरिमाश्रयामः ॥ ८ ॥

यद्वीक्षया जगदिदं प्रकृतिः ससर्ज
कालस्वभावनियतीश्च गुणत्रयं च ।
सृष्ट्वा च तत्प्रविशति प्रतिबिम्बवद्यः
साक्षी च जीव इति तं भगवन्तमीडे ॥ ९ ॥

प्रतप्तजाम्बूनदपिङ्गभासा
कटिस्थलं भूषयतांशुकेन ।
वलाहकं वैद्युततेजसेव
प्रदीप्तमेतं प्रणुमोऽम्बुदाभम् ॥ १० ॥

शिक्यप्रहारविहृतात्परमाहितेन
नीराजनेन मुदितं भगवन्तमेतम् ।
संवीक्ष्य दक्षिणदिशाभिमुखं द्विजेन्द्राः
स्तम्भं व्यवस्रवकरं प्रति यान्ति मोदात् ॥ ११ ॥

पश्यैतं तृणराजदघ्नमभितश्चैरण्डतैलाङ्कितं
स्तम्भं तुङ्गवटप्ररोहकलितं संस्थापितं भूतले ।
अस्याग्रे चतुरश्रकं विरचितं सप्ताष्टदाम्नान्वितं
शाष्कुल्यादिकभक्ष्यनिष्कसहितं हृद्यं च यन्त्रं सखे ॥ १२ ॥

एवं तत्सुगुणस्य वचनं श्रुत्वा सुमतिः सानन्दमभिवीक्ष्य तं स्तम्भं—सखे अत्रापि महीसुरतरुणैरन्यापि विहृतिः कलयितुं समारभ्यते ॥

आरोहे यस्य यूनाममितबलवतामप्यमूर्वीक्षणेना-
वस्रावश्रावसर्पोऽप्यवगळनमवस्रंसनं संभवेयुः ।
तादृक्षं स्तम्भमेते द्विजवरतरुणा वीक्ष्य निःशङ्कमेतं
श्रीकृष्णापाङ्गशक्त्या प्रचुरभुजबलाः प्रक्रमन्तेऽधिरोढुम् ॥

उत्तुङ्गपश्वपनराङ्गसमुच्छ्रयाऽसौ
निर्यासकैर्विविधपादपसंघजातैः ।
गोधूमचूर्णसहितैरनुलिप्तपूर्वः
स्तम्भो महानतिदृढश्च विभाति विद्वन् ॥ १४ ॥

आरोहन्ति महीसुराः कतिचन स्तम्भं समीपस्थिताः
केचित्तान्सहकुर्वतेऽद्य कतिचिद्दोर्भ्यां विकर्षन्ति तान् ।
अन्ये स्तम्भतले निजांशुकवरं बद्ध्वा समारुह्य तं
हस्ताग्रेण च यन्त्रमुन्नतमिदं मोदाज्जिघृक्षन्त्यमी ॥ १५ ॥

अवपतनममुष्यारोहणे मे भवेदि-
त्युदितनिजविचारः कश्चिदादौ द्विजन्मा ।
न किमु मृगवसत्या कृष्यते कर्षकैर्भू-
रिति कलितविचारोऽभ्येति भूयोऽधिरोढुम् ॥ १६ ॥

आदौ भुजाभ्यां पृथुगन्धहस्ति-
शुण्डोपमाभ्यां परिवेष्ट्य केचित् ।
आरोढुमुत्साहबलाद्यतन्ते
स्तम्भं न चोर्ध्वं गलनात्क्रमन्ते ॥ १७ ॥

अत्रापि शुद्धसलिलैरभिषिच्यमाना
नेत्रेषु कर्णविवरेषु शिरस्सु चामी ।
विप्रास्तथापि निखिलं परिभूय युक्त्या
यन्त्रं ग्रहीतुमनसः प्रयतन्त एव ॥ १८ ॥

स्तम्भस्य मध्यतळमाश्रित एष कश्चि-
द्यत्नात्सहायतरुणांसभुवीह तिष्ठन् ।
यावत्पदं विनिदधाति निबद्धवस्त्रे
तावद्गळत्यहह तैः सह वस्त्रबन्धैः ॥ १९ ॥

एतत्स्तम्भानुलिप्तान्विविधतरुभवानुग्रनिर्यासलेपान्
पाथःसेकेन किंचिन्म्रदिमवत इमे स्वैर्नखाग्रैः क्षिपन्तः ।
वस्त्राण्याबध्य चोच्चैः सहचरतरुणैः क्लृप्तसाह्या निशीथे
प्रोद्भूतामर्षयुक्ता निजभुजबलतो यन्त्रभेदे यतन्ते ॥ २० ॥

स्तम्भाधःस्थयुवद्विजन्मगळमारूढोऽपरस्तस्य चा-
प्यंसस्थस्तरुणोऽस्य चांसभुवि सन्नन्यः स्वकीयांशुकम् ।
स्तम्भे वेष्टयितुं यदा प्रयतते तावत्क्षितिस्थद्विज-
भ्रान्त्या तेऽवपतन्ति हन्त न गुणाः सन्त्येकदोषे दृढे ॥

अयं हि तरुणद्विजः शिखरभागमाप्तः क्रमा-
दधःस्थितमहीसुरैः सलिलसेचनोपद्रुतः ।
जहाति न निजां धियं तदधिरोहणे सज्जनो
नहि त्यजति निश्चयं क्वचिदपीह कर्मण्यहो ॥ २२ ॥

इमं शिखरगं द्विजं तरुणमात्मक्लृप्तोद्यमं
निरीक्ष्य सममीर्ष्ययास्य पतने समुद्युञ्जते ।
समं सलिलसेचनैरथ परेऽभिनन्दन्ति तं
दुराशयमहात्मनोर्जगति रीतिरेतादृशी ॥ २३ ॥

अधिकगुणसमृद्धं प्राप्नुवन्भक्तिपूर्वं
प्रभुवरमधिगच्छेदत्र कीर्तिं धनं च ।
इति बुधवचनं तन्न्याय्यमेतत्प्रपन्नो
हरिमिह तरुणोऽयं यन्त्रगं स्वर्णमार्च्छत् ॥ २४ ॥

यदैव यन्त्रस्थसुवर्णमेतल्लेभे तदा वाद्यनिनाद एषः ।
मन्थाद्रिसंक्षुब्ध इवाम्बुराशिर्दिगन्तरालं मुखरं विधत्ते ॥२५॥

सखे पश्यात्र प्राच्यां मृगाङ्कोऽपि यदुनन्दनकृतकाचिताघातनिरीक्षणकौतुकाविष्ट इवेदानीं समुल्लसति ॥

यन्त्रस्थहेमग्रहणेन सर्वैः प्रशस्यमानं द्विजवर्यमेतम् ।
प्रपन्नबन्धुं हरिमप्ययं हि दिदृक्षुरेष द्विजराज एति ॥ २६ ॥

स्मरनृपजययात्राचामराः शीतभानो
रजनियुवतिमुक्तायष्टयो हृद्यरूपाः ।
विदधति किरणौघाः भृङ्गमालासदृक्षं
नभसि विततमेतद्ध्वस्मसाद्ध्वान्तबृन्दम् ॥ २७ ॥

विलोकयाधुना सखे शशाङ्कखण्डमण्डलं
कथञ्चिदीक्ष्यलाञ्छनं च पञ्चबाणभूपतेः ।
निविष्टकज्जलाक्षरं दिगन्तजैत्रपत्रकं
किलैतदीक्ष्यते नृणां प्रबोधनाय सत्पथे ॥ २८ ॥

यदाग्रहीद्यन्त्रमिदं द्विजन्मा तदैव सर्वे भगवत्प्रसादम् ।
अवाप्तुमुन्नम्रशिरोधराक्षास्तं प्रार्थयन्ते धरणीतलस्थाः ॥ २९ ॥

तेषामभीष्टसिद्ध्यै स्तम्भाग्रगतो द्विजातिवर एषः ।
शष्कुल्यादिकमेतच्छकलीकृत्याभितः क्षिपति ॥ ३० ॥

सोऽयं भित्त्वाथ यन्त्रं तरुशिखरगतं तत्र निक्षिप्तपूर्वं
गाङ्गेयं शष्कुळीनां चयमपि मधुरास्वाद्यभक्ष्यादि मोदात् ।
आदायाथावतीर्याप्यथ निजसुहृदां संविभज्य प्रदाय
श्रीमन्तं वासुदेवं सह सहचरकैरेत्य नत्वा स्तवीति ॥३१॥

॥ अत्र सर्वगोपकृता पञ्चविंशतिका भगवत्स्तुतिः ॥

श्रीर्दारा यस्य वेधाः सुत इह भुजगेन्द्रोऽपि शय्या सुपर्णो
यानं शम्भुश्च मित्रं जगदिदमखिलं रत्नपूर्णं स्वसौधम् ।
शक्राद्याश्चापि भृत्याः सततमपि विभोस्तं त्रिलोकीकुटुम्ब-
क्षेमाधानैकलोलं सकरुणहृदयं वासुदेवं नमामः ॥ ३२ ॥

महादेवादाशु प्रणतवरदादीप्सितवरं
प्रपद्याथ प्राप्तं निजवरपरीक्षार्थमसुरम् ।
वृकं वर्णी भूत्वा शिवहृदयतुष्ट्यै किल हरि-
र्जघानोपायोक्त्या य इह विनुमस्तं मधुरिपुम् ॥३३॥

निजातिदुष्कृतं स्मरन्नजामिळो महीसुरः
पुरा स्ववासनाबलात्सुतं भिया समाह्वयन् ।
स्वनामकीर्तनश्रवप्रहर्षितेन येन स
व्यमुच्यतान्तकालयाद्धरिं तमाश्रयामहे ॥ ३४ ॥

सुदामधरणीसुराय च भवत्सखित्वाप्तितो
मुदं समुपजग्मुषे निजवधूमनस्तुष्टये ।
भवन्तमुपसेदुषे द्रविणवाञ्छया धीमते
ददौ द्रविणमक्षयं जगति यश्च तं संनुमः ॥ ३५ ॥

प्रतिश्रुतगिरोऽपि यः स्वपदसंश्रितप्रीणने-
ऽधिकं प्रणयमात्मनो जगति दर्शयन्स्यन्दनात् ।
नदीसुतवधेहया धृतसुदर्शनोऽवातर-
द्रणे प्रणतवत्सलं हरिमुपास्महे तं सदा ॥ ३६ ॥

ममन्थिथ सुरौजसे कलशवारिधिं दानवान्
जघन्थ च समुज्जहर्थ च वसुन्धरां दंष्ट्रया ।
वितेरिथ जगत्त्रयीपतिपदं च जम्भारये
महाबलिमदं च यो व्यपनिनेथ तं त्वां नुमः ॥ ३७ ॥

नवजलधरनीलं श्रीमुखास्वादलोलं
सुररिपुकुलकालं काञ्चनच्छायचेलम् ।
गळधृतवनमालं स्वीयभक्तानुकूलं
त्रिभुवनजनिमूलं संश्रयामोऽनुवेलम् ॥ ३८ ॥

अयि कंसनिषूदन हंसवरस्तुतदिव्यनिजापरिमेयगुणा-
कर शक्रमुखामरक्लृप्तनुते वरहापुरनित्यनिवासरते ।
धरणीतरुणीसुतगेहकृते सततव्ययिताखिलकालकलान्
भवदीयपदाम्बुजभक्तिविनाकृतमूढधियोऽपि च पालय नः ॥

जय जय रथाङ्गपाणे सत्यव्रतभूपरक्षकादिझष ।
जय जय कच्छपमूर्ते पृष्ठे धृतमन्दरामरामृतद ॥ ४० ॥

जय जय वराहमूर्ते हिरण्यपूर्वाक्षदैत्यनिर्मथन ।
जय जय नरहरिरूप प्रह्लादाभिख्यभक्तविनुतपद ॥ ४१ ॥

जय जय वामनमूर्ते वैरोचनिदानदर्पहरणचण ।
जय जय भार्गवराम ब्रह्मद्विट्क्षत्रवर्गगर्वहर ॥ ४२ ॥

जय जय दशरथभूपतिनन्दन दशकन्धरादिदैत्यरिपो ।
जय जय हलधरमूर्ते सकलसुखावाप्तिसुखितहृदय हरे ॥४३॥

जय जय कृष्ण मुरारे कंसान्तक रुक्मिणीमनोरमण ।
जय जय पाण्डववत्सल भक्तिविधेयादिपूरुषामितद ॥

जय जय भूमिभरापहचित्रचरित्राप्रमेयनिजमहिमन् ।
जय जय भूसुरबन्धो वाङ्मनसातीत सद्गुणावसथ ॥ ४५ ॥

जय जय गोगणपालक शिक्यितनवनीतभक्षणैकपर ।
जय जय गोपमनःप्रिय नन्दात्मजधेनुसंघसौख्यकर ॥४६॥

जय जय मुनिजनपत्नीमुक्तिप्रद विप्रसूनुजीवितद ।
जय जय सुदामसखिताप्रकटितसमुपासकप्रणय ॥ ४७ ॥

जय जय कपिलवपुर्धर मातुर्निजतत्त्वयोगबोधकर ।
जय जय मैत्रेयोद्धवभक्तसमाराध्यपादसरसिरुह ॥ ४८ ॥

जय जय हंसध्वजनृपसूनुसुधन्वादिगीतनिजमहिमन् ।
जय जय खट्वाङ्गनृपक्षेमद नामानुभावलोकगुरो ॥ ४९ ॥

जय जय पृथुनृपमूर्ते गोरूपधरावनिस्थसारहर ।
जय जय हयमेधक्रतुशतयाजिन्पालितप्रजौघ हरे ॥ ५० ॥

जय जय वसुदेवात्मज जय जय यदुवंशवार्धिहिमकिरण ।
जय जय सर्वरसाश्रय जय जय सच्चित्सुखादिनिलय हरे ॥ ५१ ॥

जय जय निर्मल निष्क्रिय नित्यनिराकार निर्विशेष विभो ।
जय जय सात्वतरक्षणविधृतविचित्रावतारचरित हरे ॥ ५२ ॥

जय जय राधावल्लभ
जय जय यमुनातटान्तकृतविहृते ।
जय जय मन्मथसुन्दर
जय जय वरहाग्रहारकृतवसते ॥ ५३ ॥

द्रष्टा स्रष्टा जगतां भर्ता धर्ता च धरणिकान्तायाः ।
तत्वं श्रुतिशिरसां यस्तं हरिमखिलेश्वरं प्रणुमः ॥ ५४ ॥

इन्दिरारमणमिन्दुसुन्दरमुखेन्दुमन्दहसिताञ्चितं
कुन्दसूनरदमिन्द्रवन्द्यपदपङ्कजं मदनसुन्दरम् ।
मन्दिरं पशुपसुन्दरीनयनखञ्जनस्य धृतमन्दरं
वेङ्कटेशविभुमाश्रये जननसंकटादिहरमच्युतम् ॥ ५५ ॥

विचित्रचरितोज्वलं विकचवारिजातेक्षणं
विहङ्गपतिवाहनं विधृतदिव्यपीताम्बरम् ।
विशालनिजवक्षसं धरणिसिन्धुजासेवितं
वराहपुरवासिनं वरदवेङ्कटेशं नुमः ॥ ५६ ॥

मन्त्रोच्चारणपूर्वकं विधिविदा देवार्चकेनादरा-
देवस्याखिललोकमोहनतनोर्दृग्दोषसंशान्तये ।
कृष्णायाकलितं प्रपन्नजनतासंरक्षकायाधुना
भक्तेभ्यो धरणीसुराः प्रददते कर्पूरनीराजनम् ॥ ५७ ॥

पश्य सखेऽधुना भगवानस्मान्मुक्ताचतुष्काच्छनैः स्वालयं प्रति प्रतिष्ठते ॥

एतद्देवनिकेतनं मणिमयं रथ्याविनोदस्थला-
द्गच्छन्तं पृथिवीसुराः बहुविधस्तोत्रादिसङ्कीर्तनैः ।
साष्टाङ्गप्रणतिप्रकल्पनशतैर्गाथाशतोच्चारणैः
कुर्वन्ति प्रणतार्तिहारिणममुं देवं प्रसादोन्मुखम् ॥ ५८ ॥

एता अप्सरसश्च काचितहतिक्रीडाविनोदेक्षण-
प्रोद्भूतामितहर्षभारविवशाः सर्वेश्वरं श्रीपतिम् ।
नानाभक्तगणैः समं निजगृहं यान्तं समीक्ष्यादरा-
द्वर्षन्ति द्युतरुप्रसूननिकरैः सौरभ्यलुब्धालिभिः ॥ ५९ ॥

तस्मादावामपि सखे कृपाजलनिधिं हरिम् ।
आलयाभ्यन्तरं यान्तं वीक्ष्यानन्दं लभेवहि ॥ ६० ॥

सखे देवमन्दिरे संमर्दबाधारहितं किमपि स्थलमधिष्ठाय भगवदालयान्तर्गतमपि मनोविनोदकरं श्रीकृष्णदिव्यचरितं पश्याव इति संभाष्य तौ मानुषरूपौ किन्नरौ शनैः शनैः सविलासं भगवदालयं प्राविशताम् ॥

तदनु च हरिमन्दिरं प्रविश्यानवधिविचित्रमणिप्रदीपदीप्तम् ।
विपुलगरुडमण्टपस्थितौ तौ यदुपतिदर्शनसौख्यमन्वभूताम् ॥

तदनु सुगुणः सखायं सुमतिं स्वसमीपवर्तिनं वीक्ष्य ।
अतिकुतुकाविष्टमना निजगादागमनवैभवं शौरेः ॥ ६२ ॥

सखे पश्य—असौ सकलजनाभिनन्दनीयमहिमा निखिलगोगोपगोपिकाजनादृतनिजबालचरितविभवः सर्वलोकनियन्ता सर्वसाक्षी निखिलसुरासुरमौळितटघटितकिरीटतटप्रत्युप्तरत्ननिकरप्रभानीराजितचरणारविन्दयुगळपीठः सर्वमुनिजनहृदयकमलचञ्चरीकायमाणनिजसच्चिदानन्दस्वरूपो भगवान् समसमयताडितानेकपटुपटहभेरीमुरजढक्काकाहळपणववेणुवीणाशङ्खझर्झरझल्लरीडमरुकप्रभृतिविविधवाद्यनिनादबधिरीकृताशेषदिगन्तराळवलयः पश्चाद्भागसंनिहितप्रयतमानससात्विकद्विजगणसुस्वराधीयमानश्रुतिशतशेखरीभूतमहापुरुषसूक्तादिकलापघोषसमाकर्णनसंतुष्टमनाः पुरस्थितानेकभागवतजनवदनकमलनिरर्गळनिर्गळन्मधुरगान्धर्वमिळितनिजापदानविभूषितनामगाननिशमनसुप्रसन्नमना वासुदेवः अग्रहाररथ्यामुखस्थलं निजपदपल्लवसंपर्कवशेन समन्ततः पवित्रीकृत्य बहुजनसंमर्दबलेन मन्दं मन्दं मुक्ताचतुष्कात्प्रस्थायानवरतगमनागमनचटुलचोळवनिताकुचकलशतटसंघर्षत्रुटितपतितमुक्ताहारमणिनिकरकोरकितकनककुट्टिमतलं समुदग्रमदविकटसंचरन्मत्तकाशिनीजनयादृच्छिककठिनप्रोत्तुङ्गपीवरवृत्तवक्षोरुहतटाश्लेषवशसंजातसुखातिशयपरावृत्तमुखपश्यत्काभिजनवदनावलोकनसमयसंजनितलज्जावनमितमुखपुण्डरीकविलसितसंदर्शनसमुद्भू-

तमुग्धमन्दहसिताञ्चितापरतरुणीजनकदम्बसंमर्दान्तरालसमुत्कीर्यमाणसकुसुमनिचयकर्पूरधूळिपटलसुरभितवियदन्तरं अतिसुरभिलजातीचम्पकबकुळकेसरमल्लिकामतल्लिकाप्रमुखसुमचयनिष्यन्दमानामन्दमकरन्दस्यन्दसंदोहास्वादनतुन्दिलेन्दिन्दिरकुलकलमधुरझंकाररवमनोहरदेवालयपुरोभागभूषणायमानहरिणाङ्ककान्तमणिमयगारुडमण्टपशिलातलं विविधविद्युत्प्रदीपशतभासुरप्रकाशकबळीकृतगाढतिमिरसंचयं, त्रिविष्टपमिव दिव्यनारीविलासविलसितं, सत्यलोकमिवासंख्यानेकभक्तजनगणपरिवीतं, क्षीरोदमिवानन्तभोगविराजमानं, निजालयस्थितं गरुडमण्टपं समायाति ॥

समेत्य जयदेवसत्कविसुगीतगोविन्दस-
त्सुधामधुरकीर्तनैरवनिदेवसंकीर्तितैः ।
स्वमानसविनोदकैः श्रवणयुग्ममानन्दय-
न्प्रदक्षिणमिहालये वितनुते द्वितीयं हरिः ॥ ६३ ॥

स्वभक्तनारायणतीर्थनिर्मित-
स्वबाल्यवृत्ताब्धितरङ्गसत्कृतौ ।
स्थितानि शृण्वन् हरिरत्र कीर्तना-
न्यसौ तृतीयं तनुते प्रदक्षिणम् ॥ ६४ ॥

ततश्च निखिलसारस्वतसारभूतनिजस्वरूपो भगवान् उत्तरभागे श्रोत्रियपाठ्यमानानि ऋग्वेदसूक्तानि, पूर्वभागे याजुषसूक्तानि, दक्षिणभागे बृहद्रथन्तरवैरूपवैराजशाक्वरमहानाम्नीरैवतनामकसप्तसामसूक्तानि, पश्चिमभागे शान्तिपुष्टिकराण्यथर्वसूक्तानि च समा-

कर्णनेन पवित्रीकुर्वन्निजालये चतुर्थं प्रदक्षिणं विधाय, पुनरप्युदीचीभागे निगमशिरोवचांसि, प्राचीभागे निखिलबुधजनसमानन्दिकां *चूर्णिकाम्, अवाचीभागे चाष्टकं, प्रतीचीभागे रामकृष्णा-

---

*इयमत्र चूर्णिका ।

जय जय भगवन्ननाद्यन्त विज्ञानघन नित्यमङ्गलस्वरूप सुन्दर गोविन्द संक्रन्दनहरिदन्तरसमुदित्वरतरणिसंदर्शनसमयसंदलदरविन्ददलकान्तिसंदोहसंतर्जनसंजातकौतूहलोल्लासिनितान्तायतनिजदृगन्तेक्षासङ्क्षणक्षुभितात्मनीनापारविचित्रशक्तियुतमायाशक्तिविशेषसमुद्भूतकर्मकालशक्तिनियतिस्वभावादिसंजनितसत्वादिगुणत्रितयसाह्यबलसमुत्साहिताव्यक्तमयनिर्मलमुकुरप्रतिबिम्बितत्रिगुणाद्विगुणशुद्धसत्वैकगुणजीवात्मसाक्षीत्यपरनामधेयविलसितभवत्प्रेरणासंचोद्यमानप्रकृतिविनिर्मितविविधकर्मजालास्पदमहदादितत्वजालविचित्रशक्तिप्रपञ्चितानन्तब्रह्माण्डमण्डलसंपुटविनिर्गतहिरण्यगर्भमानसकलितप्रजापतिविहितनिखिलसुरनरतिर्यगादिचराचरात्मकसमस्तभूतजातसमाकलितविविधचेष्टाविलसितनिरीक्षणसमयसोत्प्राससमुपजायमाननिरतिशयानन्दसान्द्र, नित्यनिर्मलनिष्क्रियनिरञ्जननिर्विकारनिर्विकल्पनिर्गुणनिजसच्चिदानन्दघनस्वरूप, यादवकुलमणिमन्दिरप्रदीप, मुरनरककंसादिदुर्मददितिजकुलपांसनमहाविपिनवंशनिवहदहनकालानल, सच्चरितसात्विकभवद्भक्तिभरितसाधुजनमनोऽनुकूल, भवदीयचरणकमलसमर्चनैकान्तहृदयदेवव्रतकीर्तितादिव्यनिजनामसहस्रानिशमननिर्वृतस्वा-

द्यवतारपद्यानि चावधारणेन सफलयन् पञ्चमं प्रदक्षिणं च समाकलय्य, ततश्चोदीचीभागे शुद्धसंगीतकं, प्राच्यां मधुरान्ध्रगीतं, दक्षिणस्यां दिशि शृङ्गाररसप्रधानकीर्तनानि, प्रतीच्यां दिशि

---

न्त भैष्मीहृदयचकोरकुमुदिनीकान्त सुरेन्द्रमदापहृतिकलितगोवर्धनाचलोद्धरणसंतोषितनिजैकशरणगोगोपजनाभिनन्द्यमान, भवदीयपदकमलसंचारपरिपूतबृन्दावनान्तविहरणनितान्तकलितानुसंधान, स्वनामस्मरणमात्रनिर्दलितविविधयातनानुभवशोचनीयनारकिजनपूर्वकलितानेकविधपातकव्रातप्रख्यापितनिजापदान, निजपदकमलपरिचर्यापरायणभूसुरकुलपालनार्थसंकल्पितवराहपुरनिवास, निःसीममहिमनिगमकदम्बपरमारामविहारिन्, पञ्चपर्वात्मिकाविद्यातिमिरकुलनिरसनभास्वन्, निरन्तरनित्यासिद्धनिर्मलनिखिलगुणगणव्यञ्जनाधार निरवधिमहिमोल्लासविशेषानवरतस्फुरितनिजानन्दास्वदनतृप्तिमन्, भवबन्धमुमुक्षाकलितकृच्छ्रातिकृच्छ्रचान्द्रायणपाराकसान्तपनादिविषमतमनियमव्रातसमाचरणसंशोषितनिजकरणग्रामयुतश्रुत्यन्तगतविषयपारदृश्वनिर्मलीकृतसत्वप्रधानहृदयशमधनमुनिजननिवहसभक्तिकध्यातशारदारविन्दसंदोहारुणरुचिकदम्बकेशाकेशिविलासचणसुकुमारनित्यसिद्धध्वजवज्राङ्कुशशफरीशतपत्रशङ्खकुलिशादिदिव्यरेखासमुच्चयसूच्यमानमहापुरुषलक्षणविभासमाननिजचरणकमलतलपरिचरणपरायणतीव्रभक्तिनैरन्तर्यनिरीक्षणसमयानुपदप्रदीयमाननिजसायुज्यपदसीमन्, निखिलशमलकुलमदान्धदन्तावलसंघसंदलनधीरमहा-

द्राविडकीर्तनानि च निशमनेन कृतार्थयन्षष्ठं प्रदक्षिणं च विधाय प्रमुदितमानसो गरुडमण्टपमध्यतलमासाद्य निषीदति ॥

सर्वदोषनिवारणक्षमतेजसो मधुविद्विषो
दृष्टिदोषनिवारणाय हि कश्चिदेष महीसुरः ।
पुष्पदामविभूषितं शुभकुम्भदीपमिमं वहं-
स्त्रिः प्रदक्षिणकर्म चातनुते गृणन्हरिवैभवम् ॥ ६५ ॥

सखे पश्यात्र कुम्भदीपेन सह त्रिर्भगवन्तं यदुनन्दनं प्रदक्षिणीकृत्य स द्विजः स्वगृहादानीतं नाळिकेरकदळीफलादिकं लघुनैवेद्यं भगवते सभक्तिकं पूजकमुखेन वितीर्य नीराजनं च कारयित्वा पूजकप्रदत्तं भगवतः श्रीवेङ्कटेशस्य प्रसादं लब्ध्वा यथास्थानमुपगतस्तिष्ठति । अथानुपदमेव पश्य पश्याद्भुतं कुत्राप्यालयेऽदृष्टश्रुतपूर्वं निखिलजनविनोदकरं चरितं प्रवर्तते ॥

एकपार्श्वादितः कोऽयमायात्यहो
श्मश्रुकूर्चावलिं नाभिदघ्नां वहन् ।
वाससा संवृतो हासयंश्चंक्रमैः
पश्यतो मानवांस्तापसः संसदि ॥ ६६ ॥

---

केसरिन् निरुपमापरिमेयसद्गुणगणमणिनिकरभूषणशेवधे, निष्किंचनानाथदीनजनसंरक्षणकरुणापयोधे, सकलदेवोत्तम, पुरुषोत्तम, श्रीनिवास, श्रीनिधे, वरद, वेङ्कटेश, सकरुणमनन्यशरणान्भवदीयपदकमलशरणागताननभिज्ञातसर्वलोकनियामकभवत्स्वरूपानस्मान्मनुजपशुरूपान्पालय पालय—

अन्यपार्श्वादितः कोऽप्ययं तापसः
पूर्ववद्धासयन्नर्तनैर्मानवान् ।
श्मश्रुळां कूर्चिकां बिभ्रदाकेकरां
दृष्टिमप्यावृतो वाससा यात्यहो ॥ ६७ ॥

एवं तपोधनवरौ समुपेत्य नृत्त-
भेदैर्जनान् सपदि हास्यरसे निमग्नान् ।
कृत्वातिविस्मयकरैर्विकृतैर्विलासै-
रन्योन्यमङ्कमिमौ हि परिष्वजेते ॥ ६८ ॥

परिष्वज्य चैतौ मिथो भक्तबृन्दा-
नुकूलं समन्दस्मिताञ्चन्मुखेन्दुम् ।
हरिं वीक्ष्य भक्त्या प्रणम्याग्रतस्तान्
हरेर्गायकांश्चानुयुङ्क्तः समोदम् ॥ ६९ ॥

कोऽयं जनानां निवहो निशीथे
देवालये संमिलितः किमर्थम् ।
यूयं च के भक्तवरा इव स्थ
कोऽयं च देवः सुमुखो विभाति ॥ ७० ॥

नवजलधरधामा चारुमन्दस्मितास्यः
सरसिजदळनेत्रो बर्हिबर्हावतंसः ।
कटितटमणिकाञ्चीकम्रपीताम्बरोऽसौ
त्रिभुवनभयहारी रङ्गधामेव भाति ॥ ७१ ॥

एवं तापसयोर्वचनस्य गायका उत्तरं वदन्ति—

अयं त्रिलोकनायकश्चराचरस्य रक्षिता
रमापतिर्धराभरापनुत्तये कृतोदयः ।
वराहपत्तनस्थिरामरौघनित्यसेवितो
निजे विभाति मन्दिरे यदूत्तमः कृपानिधिः ॥ ७२ ॥

एवं निगद्य भगवद्गुणगायकेन्द्राः
सप्रश्रयं समुपसृत्य हरेः पुरस्थाः ।
आश्चर्यसंभृतहृदः प्रणतिं विधाय
पृच्छन्ति तापसवरावतिचित्रचेष्टौ ॥ ७३ ॥

स्वागतं कौ युवां तापसौ संसदं
प्राप्तवन्तौ हरेश्चित्रवेषाकृती ।
यास्यथः कुत्र वा किंस्थलादागता-
वद्भुतं वर्तते कथ्यतां प्रीतितः ॥ ७४ ॥

किं बन्धुत्वं किं सखित्वं मिथो वा-
मेतं प्रश्नं सोत्तरं नो विधत्तम् ।
यस्मादत्र प्राप्तकामौ स्वसिद्ध्या
प्राप्तावस्मद्भागधेयेन रात्रौ ॥ ७५ ॥

एवं पृष्टौ गायकेन्द्रैः सभाया-
मेतौ सिद्धौ तान्निरीक्ष्य प्रहृष्टौ ।
पूर्वं सभ्यं वासुदेवं हि भक्त्या
संनम्यैषामुत्तरं प्रब्रुवाते ॥ ७६ ॥

तत्र प्रथमतापसो वदति—

स्वाधिष्ठानपुरे वसन्नहमहो स्वानन्दपूर्णः सदा
केनापि प्रकृतेर्विचित्रविधिना तस्मात्पदाद्भूमिगः ।
युष्मान्संगतवान्पुराणपुरुषासेवानिबद्धादरा-
न्युष्माभिः सह कीर्तयन् हरिगुणानेष्यामि च स्वं पदम् ॥

एवं प्रथमतापसगिरं श्रुत्वा गायकाः पुनः पृच्छन्ति—

भवान्ह सर्वागमपारदृश्वा
विभाति सर्वे भवतो गिरं ताम् ।
ज्ञातुं न शक्ताः सदयं भवांस्तां
स्वदेशवाचा विवृणोतु सम्यक् ॥ ७८ ॥

प्रथमतापसो वदति—

स्वाधिष्ठानाभिधं ब्रह्म परं तद्रूपतां गतः ।
पुरासं प्रकृतेर्दोषाद्भ्रंशितो धरणीमगाम् ॥ ७९ ॥

परमपुरुषसेवातत्परानत्र युष्मा-
निह सुचरितलेशाद्वीक्ष्य सद्ब्रह्मभक्तान् ।
सुजननिवहसङ्गादादिविष्णोर्गुणौघा-
नहमपि कथयन्सन्प्राप्नुयां प्राक्पदं तत् ॥ ८० ॥

अथ द्वितीयतापसो वदति—

डोलाग्रामनिवास्यहं सुखधिया डोलायमानाशयो
गेहापत्यकलत्रवित्तवसुधाकायादिषु व्यापृतः ।

तत्रायान्तमिमं प्रकल्प्य मनसः स्थैर्याप्तये सद्गुरुं
शिष्योऽहं शरणं भजे मम मनःस्थैर्यं विदध्याद्गुरुः ॥ ८१ ॥

द्वितीयमेतमपि तापसं गायकः पृच्छति—

भवानपि दयां कृत्वा भवद्वासस्थलाभिधाम् ।
स्वदेशभाषयाख्यातुं जिज्ञासूनामिहार्हति ॥ ८२ ॥

द्वितीयतापसो वदति—

डोलापुरं ह्यूञ्जलूरित्याख्यया भुवि विश्रुतम् ।
तत्रस्थोऽहं लोलचित्तः पश्यैतं गुरुमाश्रयम् ॥ ८३ ॥

अयं मे गुरुश्चापि युष्मन्निषेवा-
बलाज्ज्ञानमाप्तुं मया सार्धमत्र ।
हरेः संनिधिं प्रापदेतन्निषेवा-
बलाच्चित्तचाञ्चल्यमीहेऽपनेतुम् ॥ ८४ ॥

श्रमघनगादताभक्तसारावाद्भुः
प्रमुदितहृद्भिरथार्यगायकेन्द्रैः ।
हरिगुणनवनाय चोद्यमानौ
यदुपतिमेतमुभौ मुनी स्तुवीतः ॥ ८५ ॥

सखे भक्तगायकजनप्रार्थनया तपोधनाविमावपि स्वरूप-वेषभूषाङ्गहारसन्दर्शनसन्त्रासितसंनिकृष्टात्रत्यकामिनीजनकटितल-स्थितबालजनभयतरललोललोचनसमीक्ष्यमाणशरीरौ भगवन्तमभिवन्द्य सुमधुरामखिलजनहृदयाह्लादिनीं गीतिं वितन्वाते ॥

अत्र भक्ततापसद्वयगीयमाना गाथास्तुतिः ।

दुरितहरणनिपुणविमलचरणसरसिजं
भुवनजननभरणविलयकरणकृतिचणम् ।
विमलकमलसदृशसदयनयनयुगळकं
जलधिदुहितृरमणमखिलविपुलविभवदम् ॥ ८६ ॥

सजलजलदनिवहसदृशसुभगतनुयुतं
मननभजनकलननिरतमुनिषु सकरुणम् ।
निगमशतगवचनानिकरविनुतगुणगण
जननमरणजनितविविधशमलविदळनम् ॥ ८७ ॥

अधररुचिभिरधिकरुचिरमृदुळहसितकं
महितमधुरवचनविवशपशुपयुवतिकम् ।
स्वकरविलसदभयवरदकमलदरवरं
श्रवणमधुरमुरळिनिनदमुदितसुरगणम् ॥ ८८ ॥

भजत वरदकमलनयनमलयमनुपमं
जहित विविधविषयविवशहृदयमलिनताम् ।
श्रयत विपुलसुकृतसुजनविविधसुखकरं
मुरभिदमलचरणनलिनयुगळमविरतम् ॥ ८९ ॥

संप्रति सखे पद्यैरपि भगवन्तमिमौ श्रीवासुदेवमष्टाक्षर-मन्त्रवर्णक्रमेण स्तुवीतः ॥

॥ श्रीभगवदष्टाक्षरमन्त्रवर्णक्रमस्तवः ॥

ओंकारान्तर्विलसदमलस्वीयदिव्यानुभावं
लोकाधारं शमधनजनस्वान्तपाथोजभृङ्गम् ।
भक्तिप्रह्वाश्रितजनमनोऽभीष्टदानामरद्रुं
श्रीवाराहाभिधपुरगतं भावये वेङ्कटेशम् ॥ ९० ॥

नव्याम्भोदोपमितवपुषं नागराजोपधानं
नानावेदोपनिषदुदितानन्तदिव्यस्वरूपम् ।
नाकाधीशप्रमुखविबुधाराध्यमानाङ्घ्रिपद्मं
श्रीवाराहाभिधपुरगतं भावये वेङ्कटेशम् ॥ ९१ ॥

मोक्षाकाङ्क्षापरमुनिजनध्यातसच्चित्स्वरूपं
मायामोहाकुलमतिजनाज्ञेयदिव्यप्रभावम् ।
मायातीतं जनिमृतिजरादुःखविध्वंसदक्षं
श्रीवाराहाभिधपुरगतं भावये वेङ्कटेशम् ॥ ९२ ॥

नानाजन्मप्रभवदुरितध्वान्तसंघाहिमांशुं
नानायोगीश्वरजनगणस्तूयमानापदानम् ।
नामस्तोत्रादिकपठनतो भोगमोक्षौ ददानं
श्रीवाराहाभिधपुरगतं भावये वेङ्कटेशम् ॥ ९३ ॥

राजत्पीताम्बरकटितटं राजराजादिवन्द्यं
रागद्वेषामयगणसमुत्सारणे वैद्यवर्यम् ।
रक्षादक्षं त्रिभुवनकुटुम्बस्य दीनैकबन्धुं
श्रीवाराहाभिधपुरगतं भावये वेङ्कटेशम् ॥ ९४ ॥

यन्माहात्म्यं निगमशिरसा भाषितुं पार्यते नो
यत्पादाब्जं श्रयति सततं सेन्दिरा सर्ववन्द्या ।
यश्चाभीक्ष्णं निरवधिकृपः सत्सु विद्योतते तं
श्रीवाराहाभिधपुरगतं भावये वेङ्कटेशम् ॥ ९५ ॥

नाकाधीशार्चितनिजपदं नूतनाम्भोदनीलं
नागारातिध्वजमनुपमाश्चर्यनानावतारम् ।
नानापापव्रजनिरसनोद्दामनामानुभावं
श्रीवाराहाभिधपुरगतं भावये वेङ्कटेशम् ॥ ९६ ॥

यस्मादेतद्भुवनमखिलं जायते येन रक्षां
प्राप्नोत्यन्ते विलयमपि च स्वीयकर्मानुसारात् ।
यश्चाजस्रं धरणिविबुधक्षेमकृत्यैकतान-
स्तं वाराहाभिधपुरगतं भावये वेङ्कटेशम् ॥ ९७ ॥

ओंकारद्रुमकोटरान्तरशुकं श्रुत्यन्तलीलावन-
क्रीडत्कोकिलमागमौघविपिनप्रान्तोल्लसद्बर्हिणम् ।
संसारार्णवकर्णधारमसुरध्वान्तौघचण्डद्युतिं
लक्ष्मीनेत्रचकोरशीतकिरणं श्रीवेङ्कटेशं भजे ॥ ९८ ॥

एवं भगवन्तं श्रीकृष्णं मधुझरीसोदरैर्नानाविधस्तोत्रैः स्तुत्वा भगवतः प्रसादं च प्राप्य सर्वजनप्रशस्यमाननिजविद्या-वैभवौ तापसाविमौ क्षणादेव कुत्राप्यन्तरधत्ताम् ॥

तदा स सुगुणो मित्रं सुमतिं वीक्ष्य कौतुकात् ।
तापसद्विजयोः कर्मविषये संशयाज्जगौ ॥ ९९ ॥

एवंविधाभिनयनेन नृणां विनोदं
सिद्धाविमौ भगवतः पुरतो विधाय ।
गीतिं शुभां हरिनुतेर्यदतानिषातां
गूढाभिसन्धिरमुयोर्वेद कोऽत्र विद्वन् ॥ १०० ॥

इति तस्य वचः श्रुत्वा सुगुणस्य तदा सुधीः ।
युक्तियुक्तमुवाचेदमुत्तरं सुमतिस्तदा ॥ १०१ ॥

दुग्धं हे बालकृष्णाभिलषसि यदि तत्क्षीरमण्डं च नृत्यन्
गायंश्चैहि प्रदद्यामममितमिति गृहे गोपयोषाभिरुक्तः ।
तल्लाभार्थं व्यतानीन्नटनमपि पुरा गानमप्येष शौरिः
सिद्धावग्रे हरेस्तत्प्रकटनमभिनीयास्तुतां वासुदेवम् ॥१०२॥

प्रतिनवनवनीतं गोपिकादत्तमिच्छन्
कलपदमपि गायन् कोमळं क्वापि नृत्यन् ।
मुदितपशुपयोषिद्दत्तमाश्नात्पुरासा-
विति हरिकृतलीलामभ्यनैष्टां विनीतौ ॥ १०३ ॥

इति निगद्य सुमतिः पुनरप्याह—पश्य सखे तापसद्वयान्तर्धानानन्तरं प्रवर्तमानं हरिचरितम् ॥

विहारगतिनामकं भुवनपालकः सप्तमं
प्रदक्षिणमिहालये विधिवदाकलय्याच्युतः ।
महारजतमण्टपं कतिपयस्वभक्तैर्वृतः
प्रयाति सुखविश्रमं कलयितुं विनातोद्यकम् ॥ १०४ ॥

सखे पश्यात्रालयाभ्यन्तरे कनकमयमण्टपे कस्तूरीमृगमदगुग्गुल्वगरुसुरभिळधूपसुरभिते सकललोकयोगक्षेमनिर्वहणधुरन्धरो नानाप्रकारदिव्यचरितानन्दितानिखिलमनुजनिवहो नियन्ताखिलदैत्यसंघानां भगवान्वेङ्कटेशो विना विविधवाद्यनिकरनिनदं निजपदकमलपरिचर्यापरैः कतिपयभक्तजनैः सह केवलमन्तःप्रवेशसमनन्तरमेवातिमधुरनिजापदानवर्णनपरदिव्यगीतादिश्रवणेन सुदूराध्वसंचरणजश्रमापनोदाय एकान्ते हंसतूलशयनसमास्तीर्णधवळप्रच्छदपटायामान्दोळिकायां राजबालक इव निजकरकमलतल एव निजभक्तजनैः परिचर्यमाणः उभयतो विचित्रमणिगणखचितहेमदण्डपरिशोभिताभ्यां सितचामराभ्यामुपवीज्यमानः समानन्द्यमानश्च तूष्णीमेकान्तविश्रान्तिसुखमनुभवति ॥

॥ अत्र भक्तजनक्रियमाणगाथास्तुतिः ॥

विश्रान्तिसौख्यं लभस्वाखिलाण्डेश
दूराध्वसंचारतः श्रीपते ।
भक्तौघसंरक्षणार्थं दयावारि-
राशेऽनुवेलं प्रयस्यन् सदा ॥ १०५ ॥

राकानिशानाथसंकाशवक्त्राब्ज
राधामनःपद्मघर्मद्युते ।
राजीवनेत्र त्रिलोकीपते देव
राजाधिराजादिवन्द्याधुना ॥ १०६ ॥

नारायणाख्यानधात्रीसुराराध्य
नागेन्द्रपर्यङ्कशायिन्मुदा ।
नाकाधिपासेव्यदिव्यस्वपादाब्ज
नानामुनीन्द्रौघचिन्त्य प्रभो ॥ १०७ ॥

पद्मामनःप्रीतिपात्राच्युतानन्त
पापाटवीवंशदावानल ।
पाराशरिप्रोक्तदिव्याप्रमेयस्व-
भूमन्ननिर्वाच्यशक्ते हरे ॥ १०८ ॥

॥ श्रीधरदशकम् ॥

शतधृतेर्गुरुं शेषशायिनं
शुकमुनीडितं शूरजान्मजम् ।
शशिनिभाननं शोकनाशनं
शुभजनावनं शार्ङ्गिणं भजे ॥ १०९ ॥

रतिपतेर्गुरुं रासलालसं
रसमयात्मकं रोगभञ्जनम् ।
रसिकशेखरं राधिकापतिं
रजकमुक्तिदं रागतो भजे ॥ ११० ॥

भजनकृत्सतां भव्यमुक्तिदं
भवनिवारकं भीष्मचिन्तितम् ।
भवविधीडितं भूतिदं हरिं
भुवनपालकं भक्तितो भजे ॥ १११ ॥

कलुषनाशन कामसुन्दर
कठिनचेतसां कालरूपिणम्
करुणया युतं कोमलाकृतिं
कुशलदायकं केशवं भजे ॥ ११२ ॥

विबुधसंनुतं विश्ववन्दितं
विकृतिवर्जितं विश्वकारणम्
वरगुणालयं वीतहृच्छयं
विजयवत्सलं विष्णुमाश्रये ॥ ११३ ॥

पुरहरप्रियं कामन
पुरुदयाकरं पूरुषोत्तमम्
परचिदात्मकं पार्थसारथिं
प्रणतवत्सलं पालकं भजे ॥ ११४ ॥

गव्यलालुप गयनामक
गुरुकुलोषितं गूढविग्रहम्
गुरुसुतप्रदं गिरिसुताग्रजं
गिरिशसंनुतं गोपमाश्रये ॥ ११५ ॥

वनजलोचन वल्लवाङ्गना-
वदनमोहनं वारिजाननम्
वरदमच्युतं वन्यमालिनं
वृषमदापहं वाग्मिनं भजे ॥ ११६ ॥

मदनाजात्प्रय मङ्गळास्पद
मुनिभिराश्रितं मुक्तकल्मषम्
मुहुरुपासितं मोहनं नृणां
मुरहरं भजे मुक्तिभुक्तिदम् ॥ ११७ ॥

वरदमच्युत
वरवराहका- वासवासनम्
वितरणद्रुमं विबुधसात्वतां
विमलमानसै- र्वन्दितं भजे ॥ ११८ ॥

मुक्तामण्टपगस्य यादवपतेर्दूराध्वसंचारजां
श्रान्तिं तां व्यपनेतुमद्य परिगृह्याशेषलोकेश्वरम् ।
हस्ताभ्यां च विना विचित्रत्रिविधातोद्यादिनादं शनैः
संवीज्योभयचामरैर्द्विजगणाः संप्रीणयन्तीश्वरम् ॥ ११९ ॥

वेङ्कटेशदेव एष लालितो महीसुरै-
र्हृद्यनामगीतवेदशीर्षघोषतोषितः ।
इन्दिराधराकराब्जलालिताङ्घ्रिपङ्कजो
दिव्यमौक्तिकासने सुखं निषीदति प्रभुः ॥ १२० ॥

महारजतमण्टपे सुखनिषण्ण एष प्रभुः
महीसुरवरार्पितं गुडघृतादिसंमिश्रितम् ।
समुद्गमतिमञ्जुळं रमवदत्र शाल्योदनं
सकेरकदळीफलं प्रणयतोऽद्य भुङ्क्ते हरिः ॥ १२१ ॥

भगवदुपभुक्तशिष्टं
शाल्योदनमेतदत्र धरणिसुराः ।
प्रददति यथावकाशं
भक्तेभ्यः संविभज्य मोदेन ॥ १२२ ॥

केचिद्विप्रेन्द्रपुत्रा मलयजभरितं हेमपात्रं वहन्तः
श्रीखण्डं भक्तिपूर्वं भजनकरमहीनिर्जरेभ्योऽर्पयन्ति ।
केचित्पुष्पाणि रम्भाफलचणकमुखान्देवनैवेद्यशिष्टा-
न्खाद्यान्देवाङ्घ्रिपद्मार्चिततुळसिदळानीह केचिद्विनीताः ॥

देवच्छत्रधरा वयं द्विगुणमेवास्मभ्यमर्प्यं विभो-
र्नैवेद्यं वयमत्र चामरधरा देवांघ्रिपीठावहाः ।
गीतस्तोत्रकरा वयं मधुरिपोश्चेतीह मुद्गौदनं
संप्रार्थ्येप्सितदायकं तदिति संचिन्त्य द्विजा गृह्णते ॥१२४॥

केचिद्भूसुरबालका भगवतो नैवेद्यभक्तं घृता-
सिक्तं स्वादुतमं मुदा करतले धृत्वा बहिर्यान्ति च ।
मध्येमार्गममी वयस्यसहिता अश्नन्ति मुद्गौदनं
दिव्योऽयं भगवत्प्रसाद इति संभाष्य प्रहृष्टा मिथः ॥

हिमजलमलयजमृगमद-
घनसारपरागघुसृणकुसुमचयान् ।
प्रददति विप्रतरुण्यः
सप्रणयं चान्यदेशतरुणीभ्यः ॥ १२६ ॥

व्रजन्ति काश्चिदङ्गना विनोदवैभवं हरे-
निरीक्ष्य बन्धुभिः समं स्ववासमन्दिरं प्रति ।
इतश्च काश्चिदादरान्निजप्रियस्य चागतिं
प्रतीक्ष्य देवमन्दिराङ्गणाद्बहिः समासते ॥ १२७ ॥

एते देवाश्च सर्वे द्विजवरकलितां काचिताघातलीलां
वीक्ष्यावाप्तप्रमोदास्त्रिभुवनपितरं देवदेवं प्रणम्य ।
भक्त्या कल्पद्रुसूनैः शिरसि समभिवृष्यालयं त्रिः परीत्य
स्वावासं यान्ति मोदात्सुरयुवतिसमासेविता व्योमयानैः ॥

एवं स्वप्रियगोपवेषधरणैः शिक्यप्रहारादिक-
क्रीडाभिस्त्ववपातुकद्रुमसमारोहादिभिः क्रीडितैः ।
नित्यानन्दपदानुभूतिसुखसंसिद्ध्यै स्वपादाम्बुजं
भक्त्या भावयतो द्विजान्सकरुणं पश्यन्हरिः पातु माम् ॥

बहुविधजनपददर्शन-
कौतुकमद्यावयोर्हि सफलमभूत् ।
यद्वासुदेवदर्शन-
मत्र विनोदेक्षणं च समभवताम् ॥ १३० ॥

काचिताहृतिविनोदवीक्षणा-
च्छ्रीमुरारिमुखपद्मदर्शनात् ।
भक्तभूसुरसमीक्षणात्सखे-
ऽतीतमत्र समयं न वेद्म्यहम् ॥ १३१ ॥

अद्यैव जन्मसाफल्यमावयोरुद्भूत्सखे ।
यस्माच्चराचरगुरोर्दर्शनं समभूदिह ॥ १३२ ॥

लब्धप्रसादावधुना च शौरे-
र्देवालयं त्रिः परितः परीत्य ।
पश्चाद्बहिर्याव वयस्य चेति
प्रदक्षिणं चक्रतुरीरयन्तौ ॥ १३३ ॥

कपिमुनिवरगोत्रोद्भूतनारायणाख्य-
द्विजवररचिते श्रीकृष्णशिक्योत्सवाख्ये ।
सरळतरनिबन्धे तुर्य आश्वास एवं
यदुपतिकृतलीलाभूषितः पूर्तिमागात् ॥ १३४ ॥

इति श्रीनारायणकविविरचिते श्रीकृष्णशिक्योत्सवप्रबन्धे
चतुर्थाश्वासः समाप्तः ॥

## ॥ पञ्चमाश्वासः ॥

एवं देवालयप्रदक्षिणाचरणे सुमतिः समन्तादिशोऽवलोक्य—सखे कथं रजनी क्षणादेव प्रभातप्राया समजनि । पश्यतु भवान्—

प्राची दिगेषा हिमगौरवर्णा
  तमःपिशाचाभिभवाद्विमुक्ता ।
शनैरुदेष्यन्तमिहाब्जबन्धुं
  निवेदयत्युत्सुकधीः प्रसन्ना ॥ १ ॥

केचिन्महादेव विभो सदा मां
  पाहीति गम्भीरमिहोच्चरन्ति ।
केचिच्च विप्राः पथि नामगानं
  कुर्वन्त एते तटिनीं व्रजन्ति ॥ २ ॥

एते च वायसगणा अभितो डयन्ते
  केचित्पतत्रिनिवहा मधुरं नदन्ति ।
वर्षीयसो द्विजवरान् शनकैरिहामी
  बाला नयन्ति सरितं ननु दण्डहस्तान् ॥ ३ ॥

रजनीप्रयाणपटहस्वनोपमा-
न्यभितश्च कुक्कुटरुतानि शृण्वती ।
निजकान्तचाटुवचनान्यगृह्णती
सुदती पुराद्य विवशानुतप्यते ॥ ४ ॥

केचिच्च मित्राणि समाह्वयन्ति
स्नानाय सह्याद्रिसुताप्रवाहे ।
केचिद्व्रजन्ति द्विजबालकाश्च
पित्रोक्तमन्त्राचरितुं प्रभाते ॥ ५ ॥

सिष्णासवः प्रवयसो धरणीसुरेन्द्रा
गेहस्थदैवतसमर्चनकर्मसिद्ध्यै ।
सह्यात्मजासलिलसंग्रहणाय कुम्भा-
नादाय मन्दगतयः प्रचलन्ति गेहात् ॥ ६ ॥

मधुपानभवं किलारुणत्वं
दधती शक्रदिगङ्गना मुखाब्जे ।
विगळत्पृथुळर्क्षहारयष्टि-
र्गळितध्वान्तनिजांशुका विभाति ॥ ७ ॥

अपरस्यां च दिशि भवान्पश्यतु ।

लाञ्छनाख्यधीवरो वियत्पयोनिधौ मुदा
प्रसार्य चन्द्रिकामयीं विशालतन्तुवागुराम् ।
तदा विलग्नतारकौघमीनसंजिघृक्षया
निशाकरप्लवस्थितः प्रयाति पश्चिमाचलम् ॥ ८ ॥

कुमुदचयविबोधने पटीयां-
स्तिमिरनिराकरणेऽप्यतिप्रगल्भः ।
अखिलजनविनोदनेऽपि दक्षो
न निरसितुं स्वकलङ्कमिन्दुरीष्टे ॥ ९ ॥

देशान्तरं शिशिररोचिषि संप्रयाते
नाथेऽद्य कैरवततिर्बहुदैन्ययुक्ता ।
भृङ्गैर्न चालपति नो हसितं तनोति
नो वासरेश्वरनवोदयमीक्षते च ॥ १० ॥

संप्रति प्राचीं दिशं पश्यतु भवान् ।

व्याधाङ्ककान्तिसदृशैस्तमसां निकायैः
सर्वत्र संचरणतो जनिताशुचित्वम् ।
भास्वानयं हिमजलैः स्वकराग्रमुक्तैः
संप्रोक्षतीव भुवनं परिशुद्धिहेतोः ॥ ११ ॥

देशान्तरागतमिमं हरिदङ्गनाः स्वं
कान्तं रविं वसुसमुज्ज्वलमाविलोक्य ।
हृष्टा मुखानि मलिनानि पुरा विभज्य
ध्वान्तौघकुन्तळभरान्परिभूषयन्ति ॥ १२ ॥

दीपैश्च तारनिवहैरमृतत्विषा च
ध्वान्तं निरास्यत न यद्ध्रुवमश्नुवानम् ।
तद्ध्वान्तमर्ककिरणैः परिभूयतेऽद्य
तेजस्विनां हि महिमा पर एव लोके ॥ १३ ॥

प्रभातमासीन्ननु हे वयस्य गत्वावगाह्याद्य कवेरजायाम् ।
निर्वर्त्य जप्यानि च वासुदेवं प्रणम्य गच्छेव निजं निवासम् ॥

एवं सुमतिवचनं निशम्य रजनीविनोददर्शनसमुपजातपरमानन्दभरितो भगवच्चरितसंदर्शनसंजातविवेकविमलान्तःकरणः सुगुणः सभक्तिकं श्रीवेङ्कटेशं भगवन्तं निखिलहृदयकमलवासिनं प्रणम्येत्थमस्तौत् ॥

॥ अत्र सुगुणकृता श्रीहरिस्तुतिर्विंशतिः ॥

वन्दे सर्वोत्तमं त्वाखिलजगदुदयस्थित्यपायादिहेतुं
नानाम्नायान्तसूक्तैरपि भृशमनभिज्ञायमानस्वरूपम् ।
कारुण्याम्भोधिमाद्यं कमलभववनुतं नारदादीड्यमानं
धात्रीभारापनुत्त्यै धृतविविधतनुं सर्वलोकाधिनाथम् ॥ १५ ॥

सर्वासां देवतानामपि तव विभुता देव वर्वर्ति शस्ये-
त्यालोच्य त्वां पुमांसं परममतिमुदा नायकं प्रागकार्षम् ।
सोऽपि त्वं निर्धनानां निजपदकमलध्यायिनां मानुषाणां
भृत्यो भासि त्रपेऽहं सततमिति रमाभाषितं कृष्णमीडे ॥

वन्दे देवं वाञ्छितदानामरवृक्षं
वन्दारूणां विश्वजनाभिष्टुतपादम् ।
नानारूपं नाकपतेरप्यभिवन्द्यं
नामस्मृत्या नाशिततापत्रयमेतम् ॥ १७ ॥

श्रीवत्सकौस्तुभलसद्वनमालिकाञ्च-
दिव्येन्द्रनीलमणिसोदरदिव्यदेहम् ।
पीताम्बरोल्लसितमादिपुमांसमेतं
वन्दे यदूद्वहमहं सरसीरुहाक्षम् ॥ १८ ॥

प्रकृतिविकृतिबाह्यं प्रत्यगात्मानमाद्यं
रविमिव बहुधामभ्राजमानस्वरूपम् ।
विरचितबहुलीलं दुष्टदैत्यौघकालं
श्रुतिविनुतपदाब्जं वेङ्कटेशं प्रपद्ये ॥ १९ ॥

पूर्वजन्मसंभृताघसंघदावपावकं
ब्रह्मजम्भसूदनप्रभृत्यमर्त्यवन्दितम् ।
ईप्सितार्थदानशौण्डमाश्रितार्तिभञ्जनं
वेङ्कटेशदेवमेतमाश्रये रमापतिम् ॥ २० ॥

भोगमोक्षसंप्रदाननित्यबद्धकङ्कणं
भूसुरेन्द्रदैवतं रमाधरानिषेवितम् ।
सिद्धतापसौघचित्तपद्ममत्तभृङ्गकं
वेङ्कटेशदेवमेतमाश्रये सदाप्यहम् ॥ २१ ॥

गोविन्द माधव मुरान्तक देव विष्णो
भक्तौघवत्सल विहङ्गमराजकेतो ।
मन्दस्मिताश्रितमुखाम्बुज नीरदाभ
त्रय्यन्तवेद्यविभवाव्यय पालयास्मान् ॥ २२ ॥

दृप्तं स्वशत्रुमपि शान्ततयैव मर्त्यः
कुर्याद्वशे हि मतिमानिति यः क्षमावान् ।
गोवर्धनाचलसमुद्धरणेन भक्तान्
प्राबोधयत्तमिममच्युतमाश्रयेऽहम् ॥ २३ ॥

विहङ्गराजवाहनं भुजङ्गराजशायिनम् ।
अनङ्गतातमाश्रये रमाङ्गसङ्गशोभिनम् ॥ २४ ॥

अमन्दमन्दमारुते पुळिन्दसुन्दरीवृते ।
कळिन्दनन्दिनीतटे भजामि नन्दनन्दनम् ॥ २५ ॥

श्रीकृष्ण हे देव पीताम्बरोल्लासि-
मध्यस्थलाबद्धकाञ्चीकलापप्रदीप्रा-
मानीलसुस्निग्धधम्मिल्लविन्यस्त-
मायूरपिञ्छावतंसोज्ज्वलत्कुन्तळाग्राम् ।

अद्येह शिक्याहतिप्रेक्षणोद्भूत-
संमोदसंजातमन्दस्मितार्द्राननेन्दुम्
मूर्तिं त्वदीयां सदा भावयेऽहं
रमाकेळिशृङ्गारधामन्नमस्ते ॥ २६ ॥

ध्यानयजनदानभजनगानमननधीजुषां
पानवसनमानवचनयानभवनदं नृणाम् ।
धर्मकलनशर्मविभवकर्मकरणबुद्धिदं
सर्वदितिजगर्वहरणमादिपुरुषमाश्रये ॥ २७ ॥

दिवसेशसुतातीरविहरणो देवेप्सितदो दितिजान्तकरो
वसुदेवसुतो वल्लवसुखदो वेधस्स्तुतयोगिजनाभिनुतः ।
वृषभानुसुताप्रीणननिपुणो वृष्णिप्रवरो वृषभासुरहा
वरुणाभयदो वारिजनयनो वाञ्छामिह मे हरिरातनुताम् ॥

यतिजनमनोवासं वेधोमुखामरसंनुतं
श्रितवरददं देवं कृष्णं भजे हृदि सर्वगम् ।
नरकमथनं यं कामार्ता व्रजे पशुपाङ्गना
मनसि दयितं ध्यात्वावापुः परं पदमक्षयम् ॥ २९ ॥

भव्यां जायाममलचरितां संपदं चाप्रमेयां
हृद्यं रूपं मतिमपि शुभां सर्वदोल्लासितां च ।
भक्तिं भक्तेष्वपि तव विभो मुक्तिमप्यर्थयन्तः
सर्वाणीमान्यपि सुकृतिनस्त्वत्प्रसादाल्लभन्ते ॥ ३० ॥

सरसिजरेणुपिशङ्गदुकूलं
निखिलजगज्जनिरक्षणमूलम् ।
प्रणयरसावितवल्लवजालं
हृदय सदा भज नन्दकुमारम् ॥ ३१ ॥

धात्रादिकदेवैर्वन्द्याङ्घ्रिसरोजो
लक्ष्मीपरिरम्भानन्दी ललिताङ्गः ।
आर्तावनदक्षो देवो यदुनाथः
कुर्यान्मम भद्रं भक्तौघविधेयः ॥ ३२ ॥

नयनयुग मुरारेः पश्य पादारविन्दं
श्रवणयुग शृणुध्वं कंसजिन्नामगानम् ।
पिब हरिचरिताख्यां दिव्यपीयूषधारा-
मयि मम रसने त्वं जन्मसाफल्यकर्त्रीम् ॥ ३३ ॥

मायातिगभूमा च रमाया हृदयेशो
मायामनुजोऽभूद्भुवि यो यादववंशे ।
कायाघवभक्तावनमायानरसिंहः
पायाच्चिरमस्मान्निरपायानघशक्तिः ॥ ३४ ॥

ततश्च सुमतिरपि सभक्तिप्रकर्षं भगवन्तमिन्दिराकान्त-मभिवन्द्येत्थमस्तुत ॥

॥ सुमतिकृतस्तवत्रिंशत् ॥

यो धन्वन्तरिरित्यमेयविभवो नाम्नावतीर्य स्वयं
हस्ते दिव्यसुधाघटं दधदधाद्देवान्महाविक्रमान् ।
मोहिन्याकृतिमाप्य दुष्टदनुजान्संमोह्य दिव्यां सुधां
देवेभ्यो व्यतरच्च भक्तवशगस्तं नौमि लक्ष्मीपतिम् ॥

इन्द्रादीनां निजचरणाम्बुजयुगपूजानिरतानां
क्षेमाधाने बहुकरुणं सजलपयोदासितगात्रम् ।
पद्मां वीक्ष्य प्रियरमणीं निजसन्निधस्थामनुरागा-
दाश्लिष्यातिप्रमदयुतं मुरजितमेतं प्रणमामि ॥ ३६ ॥

नवजलदनिभवपुषमतिमहितनन्दं
नवनलिनसदृशदृशमवितमुनिबृन्दम् ।

भवगहननिवहदवमनघसुखकन्दं
　　कलशभवगुरुमपि हृदय भज मुकुन्दम् ॥ ३७ ॥

यं कृष्णं स भजन्ननन्यमनसा हृद्रोगशान्त्यै पुरा
　　श्रीनारायणतीर्थसद्गुरुवरो नीरोगतामासदत् ।
श्रीगोपालमहीसुरोऽपि भगवन्नामौघसिद्धान्तकृ-
　　त्कीर्तिं प्राप च यच्चरित्रकथनात्तं भावये श्रीपतिम् ॥

गोपालभागवतसोदरकृष्णनाम-
　　सद्भक्तगीतनिजजन्मकथातिहृष्टम् ।
सात्राजितीहृदयतोषणसंप्रदत्त-
　　देवद्रुमं सकरुणं हरिमानमामि ॥ ३९ ॥

गोपालभागवतभूसुरसूनुराधा-
　　कृष्णाभिधाननिजभक्तनुतात्मकीर्तिम् ।
भक्तावनैकनिरतं भवसिन्धुपोतं
　　लोकेश्वरं यदुपतिं मनसा स्मरामि ॥ ४० ॥

गोपिकावदनपङ्कजभास्वान् शूरसूनुकृतपुण्यविपाकः ।
भक्तमानससरोरुहहंसः पातु मां हरिरभीष्टसुरद्रुः ॥ ४१ ।

रुक्मिणीहृदयपङ्कजभृङ्गो
　　यादवान्वयपयोनिधिचन्द्रः ।
राधिकानयनखञ्जननीडः
　　पातु मां हरिरसौ भुवनेशः ॥ ४२ ॥

ऋषभकपिलदत्तात्रेयपृथ्वम्बरीष-
ध्रुवमनुनरसिंहाद्यावतारैर्धरायाम् ।
निजभजनमहत्त्वं व्यानगीशः सतां य-
स्तमिममतिदयालुं वेङ्कटेशं निषेवे ॥ ४३ ॥

दिनपतिरिति केचिद्विश्वकर्तेति केचि-
द्गणपतिरिति केचित्काल इत्येव केचित् ।
परशिव इति केचिद्भावयन्तेऽद्वितीयं
वरदमिह भवन्तं वेङ्कटेशं भजेऽहम् ॥ ४४ ॥

पञ्चाध्यायीपठनबलतो रामलीलाचरित्रे
भक्तिं ज्ञानं मदनविजयं चापि लब्ध्वा भवाब्धेः ।
उत्तीर्णः स्यात्प्रयतहृदयो यस्य पादारविन्दं
ध्यायन्मर्त्यस्तममितदयं भावये बालकृष्णम् ॥४५॥

कर्मेति केचन वदन्ति हि शब्दरूपं
ब्रह्मेति केचन बुधास्त्रिपुरेति केचित् ।
अव्यक्तमेवमपरे हृदि भावयन्ते
सर्वात्मनाऽखिलसमीहितदं भजे त्वाम् ॥ ४६ ॥

प्रकृतिरिह हि बीजं जङ्गमाजङ्गमाना-
मिति कतिचन मत्वा सन्ततं त्वां भजन्ते ।
निखिलभुवनमूलं शक्तिरित्येव केचि-
न्मनसि सुदृढभावाः पूजयन्त्यादरात्त्वाम् ॥ ४७ ॥

तुर्यं ब्रह्म समामनन्ति मुनयः सम्यग्जिताक्षाः सदा
त्वद्रूपस्मरणप्ररूढपुलकानन्दाश्रुपूरोद्गमाः ।
सोऽहंभावनया समाधिनिरता ज्योतिःस्वरूपस्य ते
प्राप्येत्थं भवदीयमेव चरणाम्भोजं भजन्ते मुदा ॥ ४८ ॥

शब्दाद्यैः फणसंचयैर्भयकृतं वक्रं मनःकाळियं
सन्मार्गोपरुधं तमःप्रकृतिकं विद्याबलाद्यो बुधः ।
आदद्यात्स्ववशे स एव हि लभेतात्मावबोधामृतं
भूमावित्युपदिश्य काळियमदध्वंसी हरिः पातु माम् ॥४९॥

श्रुतमविनयः शौचं दम्भः कुलं दुरहंकृतिः
शममलसता क्षान्तिं गर्वो विनाशयति प्रभो ।
कथमिव ततः शान्तिक्षान्त्यादिवर्जितधीरहं
तव पदपयोजातं सेवे तपस्विभिरादृतम् ॥ ५० ॥

कालिन्दीजलमज्जनाकुलवधूवस्त्राहृतिव्याजतो
हित्वात्मीयकुलाभिमानमवनावाधूय लज्जामपि ।
भक्त्या मां शरणं व्रजन्ति खलु ये ते मत्कृपाभाज इ-
त्यर्थं यः समुपादिशद्यदुकुलाब्धीन्दुं भजे तं हरिम् ॥ ५१ ॥

सहस्रकवचाभिधामररिपोः समुन्मूलने
द्विधा निजवपुर्दधन्नरसखं च नारायणम् ।
तपः परममास्थितो बदरिकाश्रमे यो विभु-
र्जघान दितिजं स्वयं तमिममाश्रये माधवम् ॥ ५२ ॥

यं यं देवं भावयन्तो वरेण्यं
भक्त्या ये ये पण्डिता अर्चयन्ति ।
तांस्तान्भक्तांस्तत्तदीहां च दत्वा
तत्तद्देवात्मानुगृह्णासि भूमन् ॥ ५३ ॥

त्रिजगति निरागस्कं को वा न रक्षति मानवं
प्रभवसि परित्रातुं मर्त्यं त्वमेव कृतागसम् ।
मुरहर कृतागस्के मूढे जनेऽपि दयानिधे-
स्तव पदसरोजातद्वन्द्वं ततो हृदि भावये ॥ ५४ ॥

भवान्बन्धुर्नॄणां तव पदसरोजं श्रितवता-
मिति ध्यात्वा जन्मप्रभृति कलये त्वां हृदि विभो ।
भवत्सेवां कर्तुं गदनिवहबाधार्दितवपु-
र्न शक्नोमि स्वामिन्किमिह करवै त्वं हर गदान् ॥ ५५ ॥

प्रभो दारा नास्य द्रविणमपि बन्धुर्न च गृहं
न पुत्रा नो मित्रं न च दुहितरः साह्यविधये ।
न चास्माञ्छक्तोऽयं निरसितुमितीवोद्धतबला
गदा मां बाधन्ते निखिलगदबाधां शमय मे ॥ ५६ ॥

न ते माता तातोऽपि च विदितपूर्वौ नहि हरे
भवान्कस्मिन्गोत्रे भवति न खलु प्रागगणयम् ।
इतीदं पद्मया वचनमवकर्ण्यापि सुभगे
तवोक्तिः सत्यैवाभवदिति गदन्पातु स हरिः ॥ ५७ ॥

भूरिकृपं भूतिददं भूमिपदं भक्तवशम् ।
भूतपतिप्रेमसखं लोकगुरुं नौमि हरिम् ॥ ५८ ॥

सर्वसमं सर्वगतं सत्यचिदानन्दघनम् ।
ब्रह्ममुखाशेषनुतं नौमि परं ब्रह्म हरिम् ॥ ५९ ॥

जय जितान्तक जय नरान्तक जय दिनेशनिरीक्षण
जय खलान्तक जय नृपार्भक जय कृतान्धक शोभन ।
जय सुरेश्वर जय दयाकर जय नमज्जनमोदन
जय धरावर जय रमाधव जय जयाखिलमोहन ॥ ६० ॥

नन्दयशोदानन्ददं नन्दकशङ्खाम्भोजकरम् ।
हंसवराभिध्येयपदं कंसरिपुं तं त्वां कलये ॥ ६१ ॥

न वेद यं पद्मभवोऽपि येन प्रवर्त्यते यन्त्रविदेव यन्त्रम् ।
स्वकर्मसु स्थावरजङ्गमात्मकं जगत्रयं तं हरिमाश्रयेऽहम् ॥६२॥

किंचिद्वित्तं किमपि सदनं कापि भूमिश्च जाया
पुत्रो बन्धुः सुहृदपि हितो यद्यमी स्युर्नराणाम् ।
स्नेहस्तेषु प्रसजति तदा पूरुषस्यैषु नैकं
चास्यास्तीशाश्रयति हृदयं देव न त्वां तथापि ॥ ६३ ॥

यो रसज्ञै रसः सर्वदा भाव्यते
धार्मिकैर्धर्मरूपो दयावारिधिः ।
कामिभिः कामरूपश्च सर्वेश्वर-
स्तं हरिं भक्तितो भावयेऽहर्निशम् ॥ ६४ ॥

॥ सुमतिकृतं दण्डकपञ्चकम् ॥

जय जय वसुदेवसूनो वराहाग्र-
हारस्थभक्तावनायात्र दिव्यालये
कृतनिजविहृते, मनोवागतीतात्म-
मायानुभावामराधीशसंसेवित ।

जलरुहनयनाम्बुदश्यामलाकार-
पृथ्वीरमावल्लभाशेषबन्धो, सदा
प्रशमितकलिकाल कृच्छ्रप्रपन्नौघ-
चिन्तामणे कृष्ण तुभ्यं नमः पाहि माम् ॥ १ ॥

इह निखिलगुरो जगत्स्थावरं जङ्गमं दृश्यते यच्च किंचित्तदेतन्न
शक्तं विना तावकानुग्रहं चेष्टितुं
नियतमतिजडं न वीक्षेत दृश्यं स्वरूपं न चाकर्णयेद्वां न विद्या-
द्रसं नापि जिघ्रेत्सुमं नापि जानीत शय्यासुखम् ।
मृदुतरमपि किंच वस्त्वत्र लोकेश सर्वं त्वदायत्तमेवास्ति तस्मा-
त्त्वदीयं पदाम्भोजमेव प्रपन्नोऽस्मि मन्दात्मनामग्रणीः,
निखिलभुवनरक्षको वेदशास्त्रात्मकश्चासि तत्त्वां विना वेद्मि
नान्यं शरण्यं व्रजामीह कृष्ण प्रसीद प्रसीद प्रभो पाहि
मां पाहि माम् ॥ २ ॥

जय जय निगमागमज्ञानशुद्धान्तरङ्गैः सदाचारवद्भिर्महद्भिः
समासेव्यमानाङ्घ्रिपङ्केरुहाशेषबन्धो सदा देव देवोत्तम,

-शयनभुजगराजराजत्फणारत्नकान्तिच्छटाभासुरप्रावृषेण्याम्बुवा-
हाभ, वक्षःस्फुरत्कौस्तुभोदारहाराभिरामप्रभो ।
विधिसुतमुनिवर्यसंप्रीणनाय स्वमायानुभावं प्रदर्श्यानुतापादियु-
क्तेन तेन स्तुतात्मीयशक्तिर्विहङ्गेन्द्रदर्पच्छिदादक्षिणो,
द्विजवरमृतपुत्रदानेन सर्वोत्तमत्वं प्रकाश्यापि मायानुभावेन
मर्त्यो यथावेह संसारचक्रेऽस्ति लीलाकरो भासि नाना-
वतारस्तथा ॥ ३ ॥

जय जय पृथिवीभरोच्छित्तये ब्रह्मदेवेन्द्रसंप्रार्थितः सन् धरा-
मण्डले यादवानां कुले देवकीसूनुरूपोऽवतीर्याथ नन्दव्रजे
शिशुजनबहुमोदयुक्तामिव स्तन्यदानच्छलेनात्मविध्वंसनाया-
गतामासुरीं पूतनानामिकां स्तन्यपानेन सल्लोकगामाद-
धानस्ततो ।
निजसुहृदमलात्मगोगोपयुक्तो बलाघप्रलम्बादिदुर्दान्तदैत्यांश्च
निर्यत्नमेव प्रणाश्याथ बृन्दावनं प्राप्य हर्षेण गोगोपसं-
रक्षणोद्युक्तधीः
सुरपतिमदभञ्जनायात्र गोवर्धनाद्रिं करेणोद्वहन्सर्वगोपांश्च सं-
तोष्य दुष्टं च कंसं निहत्याचलां प्रीणयन्सर्वलोका-
धिनाथ प्रभो पाहि मां दीनबन्धो सदा ॥ ४ ॥

जय जय भगवन्ननाद्यन्त हे वेङ्कटेश प्रभो क्षोणिदेवैर्वराहा-
ग्रहारस्थितैस्त्वत्पदाम्भोजमासेवमानैरमीभिः सदा

गृहसुतधनदारबन्धूर्वराधेनु-मित्रौघसौख्यादि--बाह्यार्थलोलैरपि
प्राक्तनेषत्कृतस्वीयपुण्यांशयोगेन सेवातिलोलाशयैः ।
प्रतिशरदमिहाग्रहारे भवत्प्रीतये काचिताघातलीलाविनोदं
प्रयत्नेन कुर्वद्भिरुद्दामचेतोवशीकारसिद्ध्यै मुदा संगतैः
साधुभिः
चिरतरमखिलाण्डकोटीश लक्ष्मीपते कृष्ण संप्रार्थितः सन्नमी-
भ्यो धरानिर्जरेभ्यः समीहां समर्प्य प्रपन्नार्तिहारिन्वि-
धेहि प्रभो नश्चिरं मङ्गळम् ॥ ५ ॥

भूमिस्त्वन्यजनाश्रया भवति हि स्वर्णं च कालक्रमा-
न्नष्टं वस्त्रविभूषणादि च भवेद्दत्तं क्रमाज्जर्जरम् ।
तस्मात्तुभ्यमिमां स्तुतिं विरचितां मन्दात्मनापि प्रभो
त्वत्तोषाय ददे प्रसीद भगवंस्त्वय्यस्तु भक्तिर्दृढा ॥ ६५ ॥

अयि देव भवत्पदाम्बुजं सकलाभीष्टविधानलालसम् ।
सततं हृदि चिन्तयन्हरे भवदीयं पदमाप्तुमाश्रये ॥ ६६ ॥

उभावपि लक्ष्मीं स्तुवीतः ।

॥ अथ लक्ष्मीस्तुतिः ॥

कृपणदशापिशाचगणमोचनवेत्रलता
मधुरिपुभक्तिवल्लिपरिवृद्धिसुधाम्बुधराः ।
हृदयतमोविमोक्षणहिमधामकराः कमले
भगवति नः पुनन्तु च भवदीयकटाक्षलवाः ॥ ६७ ॥

दूराजावसथाभिधाननिरयद्वाराग्रजाग्रन्नर-
　क्रूरालापशराहतिव्यतिकरान्दूरान्निराकुर्वती: ।
पारावारसुते तरङ्गय मयि स्मेराम्बुजस्पर्धिनी-
　र्घोरापारसमस्तदुष्कृतपरीहाराय धीरा दृशः ॥ ६८ ॥

नित्यामेव विभूतिमम्ब ददतो निर्व्याजबन्धोर्भव-
　द्दिव्यापाङ्गलवस्य वर्णनविधौ को लब्धवर्णो भुवि ।
जुष्टो दृष्टिभिरष्टभिश्च तिसृभिः प्रायः सहस्रेण वा
　देवि द्वादशभिश्च दैवतगणो यस्मै चिरं तिष्ठते ॥ ६९ ॥

कनकशिबिकारूढाः प्रौढाधिराज्यपदे स्थिताः
　कतिचिदतुलंमन्या धन्याश्चरन्ति यदिन्दिरे ।
यदपि च वहन्त्येनान्दीनाः परे फलमम्ब त-
　द्द्वयमपि तव स्तोकालोकान्वयव्यतिरेकयोः ॥ ७० ॥

जडं मामायातं जननि शिशिरापाङ्गविसरैः
　कृपापूरस्मेरैः क्षणमिह कृतार्थीकुरु मुदा ।
ततः को वा दोषस्तव भवति दैत्यारिदयिते
　मरौ वा मेरौ वा भगवति समं वर्षति घनः ॥ ७१ ॥

दुर्लङ्घसंसृतिमहोदधिकर्णधाराः
　संपद्वधूसततनर्तनसूत्रधाराः ।
अज्ञानकाननविदारकुठारधाराः
　पद्मे पुनन्तु भवदीयकटाक्षधाराः ॥ ७२ ॥

स्तुत्वैवं किन्नरौ तौ सविनयमनघं वासुदेवं स्वभक्त्या
सान्द्रानन्दौ मुरारेरनुपमचरितावेक्षणादग्रहारे ।
प्रस्थायेतौ प्रभाते मुरहरभवनात्सह्यजातीरभूमिं
गत्वा नद्यां यथावद्विहितमतनुतां मन्त्रवत्स्नानकृत्यम् ॥

कावेर्यां कृतमज्जनौ विधिकृतस्नानादिसंध्यादिकौ
तत्र स्नातुमुपागतैरतिथिषु श्रद्धालुभिर्भूसुरैः ।
भक्त्या सादरमर्थितौ तदनु तैः साकं समासाद्य तं
ग्रामं भूमिसुरालये व्यतनुतां भक्तिं यथार्हां च तौ ॥ ७४ ॥

शिक्याघातदिने महोत्सवनिरीक्षार्थं समभ्यागता-
न्भूदेवानखिलान्सुधासुमधुरैर्भक्ष्यान्वितैर्भोजनैः ।
प्रत्यब्दं सुहितां तनोति हि दिवा रात्रौ च सप्रश्रयं
श्रीशासेवनतत्परो द्विजवरोऽयं *श्रीनिवासाभिधः ॥ ७५ ॥

श्रीमत्पञ्चनदस्थलादिह समागत्याग्रहारे दिवा
वैदर्भीपरिणीतिमङ्गळदिने सद्धर्मशीलो द्विजः ।
†कश्चित्स्वादुतमान्नदानविभवैरभ्यागतान्भूसुरा-
न्प्रत्यब्दं वितनोति तृप्तमनसः श्रीशप्रसादेप्सया ॥ ७६ ॥

* श्रीनिवासार्योऽयं द्विजवरो वराहपुराभिजनः श्रीवैद्यनाथशास्त्रिणां पौत्रः श्रीमुत्तुशास्त्रिणः पुत्रः एतत्प्रबन्धप्रणेतृभिमानिषु मुख्यतमः । एतद्वंशीयैरन्नदानरूपोऽयं धर्मश्चत्वारिंशद्वत्सरैराचर्यते ॥

† श्रीवेदमूर्तीनां पञ्चनदक्षेत्रवासिनां ब्रह्मश्रीयुत-मुत्तुघनपाठिनां स्वीकृत-पौत्रः श्रीसुब्रह्मण्यार्यनामा ॥

भैष्मीपाणिग्रहणसुदिने वेङ्कटेशस्य भक्त्या
रम्ये गेहे कतिचन विदेशागतान्सज्जनौघान् ।
सूपापूपप्रचुररसवद्भक्ष्यखाद्यादियुक्तं
भक्तं सम्यक्प्रणयमधुरं प्राशयन्ग्रामविप्राः ॥ ७७ ॥

सम्यग्भुक्त्वा घृतमधुदधिक्षीरसंमिश्रमन्नं
साकं भक्ष्यैः पनसकदळीचूतजातैः फलौघैः ।
भैष्मीपाणिग्रहणचरितं भक्तसंकीर्त्यमानं
देवागारे स्वयमशृणुतां किन्नरौ तौ समेत्य ॥ ७८ ॥

अथ तत्र देवभवनेऽतिविचित्ररङ्गवल्लीसमुदायादिसमलंकृते गारुडमण्टपे भगवत्कथाश्रवणलोलुपानेकराजसतामसप्रभुवरास्तिकवैदिकश्रोत्रियसात्विकजटिलायां विविधमङ्गळकरहरिद्रानुलेपनरमणीयतमनालिकेरगन्धकुसुमाक्षतचूतपल्लवादिपाणिग्रहणसमयावश्यकशुभवस्तुगणविराजितायां सभायां विविधप्रदीपभासुरेऽन्तर्मुक्तामण्टपे च प्रतप्ततपनीयशृङ्खलालम्बमानायां परितो विविधमुक्तासरगणपरिलसितायां पार्श्वद्वयेऽपि यथार्हसंनिवेशविचित्रतरक्षौमाम्बरमुक्तामणिमयहारादिभूषणभूषितातिदर्शनीयाकृतिकनकपाञ्चालिकायुगळकरतलधारिततालवृन्तव्यजनसितचामरालोलितायां मणिमयडोलायां सुखनिषण्णस्य यथोचितमत्यनर्घमहामणिनिकरखचितमकुटकटकमकरकुण्डलालङ्कृतकाञ्चीकेयूरनूपुरादिविविधभूषणैर्भूषितस्य सकलजनमनोनयनमोहननिजदिव्यवेषस्य

लोकत्रयगुरोः श्रीकृष्णस्य पुरतः कश्चिदार्यचरितः सर्वागमवित्सु-मधुरवाक् प्रवचनशीलः पण्डितवरः अत्रत्यमहाजनप्रार्थनया भगवन्तं श्रीकृष्णं सभक्तिकमादौ प्रणम्यातिगभीरमधुरमेवं रुक्मिणीपरिणयचरितमवादीत् ॥

विदर्भदेशे खलु कुण्डिनाख्ये पुरे पुरा भीष्मकनामधेयः ।
आसीद्वदान्यः सुगुणो महीपो देवद्विजानाथजनातिभक्तः ॥

तस्याभवन्पञ्च सुताः खलास्ते
रुक्म्यग्रजो रुक्मरथो द्वितीयः ।
स रुक्मबाहुः स च रुक्मकेश-
स्ततः प्रसिद्धो भुवि रुक्ममाली ॥ ८० ॥

एषां स्वसा रुक्मिणीति प्रथिता सुगुणालया ।
सुन्दरी पितृवात्सल्यपात्री कन्याभवत्तदा ॥ ८१ ॥

सा जातुचित्तातसमीपवर्तिन्यन्यप्रदेशागतवर्ण्यमानान् ।
दातृत्वसौन्दर्यकुलातिशौर्यमुखान्गुणौघानशृणोन्मुरारेः ॥ ८२ ॥

ततः प्रभृति रुक्मिणी सुचरितातिधीमत्यसौ
निबद्धनिजमानसा यदुपतौ जगन्मोहने ।
हरावधिकभक्तिमत्यपि च तद्गुणाध्यानत-
स्तमेव भुवि सत्पतिं मनसि निश्चिकायात्मनः ॥८३॥

एवं स्थिते परिणयार्हदशामुपेतां
वीक्ष्यातिसुन्दरतनुं नृपतिः स्वकन्याम् ।

श्रीकृष्णमेव सदृशं पतिमात्मपुत्र्या
ध्यायन्स्वसूनुभिरसौ विनिवारितोऽभूत् ॥ ८४ ॥

ज्येष्ठो रुक्मी दुर्मतिश्चेदिदेशा-
धीशं स्निग्धं दामघोषं महीपम् ।
तं सोदर्याः सत्पतित्वे प्रकल्प्य
प्रावर्तिष्टोद्वाहघोषं विधातुम् ॥ ८५ ॥

वैदर्भीपरिणीतिमङ्गळमहाघोषं निशम्यागतै-
र्दूतैर्भूपतयो युवान इह ये ते सर्वसैन्यैर्निजैः ।
साकं तत्परिणीतिवीक्षणरसाच्चागत्य भूषोज्ज्वलाः
सान्द्रत्कुण्डिनपत्तनं विदधिरे वैदर्भसंमानिताः ॥ ८६ ॥

चैद्योऽपि मागधमहीपमुखैः स्वसैन्यै-
र्मित्रैः सहैत्य निजबन्धुजनैः प्रहृष्टः ।
रुक्म्यादिभिश्च वरसत्कृतिसत्कृतः सन्
ध्यायंश्च राजतनयां हृदये न्यवात्सीत् ॥ ८७ ॥

एतच्छ्रुत्वात्मीयसख्या मुखेन
राज्ञः पुत्री खिन्नचेतास्तदा सा ।
स्वेष्टावाप्त्यै कंचनाप्तं द्विजेन्द्रं
संदिश्य द्राक्प्राहिणोद्द्वारकायै ॥ ८८ ॥

साक्षाद्द्रष्टुं वासुदेवं स वाञ्छन्साधुः क्षोणीनिर्जरः सच्चरित्रः ।
संमोदेन द्वारकां प्राप्य शीघ्रं तत्रापश्यद्वासुदेवं विविक्ते ॥

सर्वज्ञो भगवान्हरिः स च धिया भैष्मीं ग्रहीतुं करे
ध्यायंश्चैद्यजरासुतादिकखलोत्सेकोपशान्त्यै यदा ।
आसीत्तावदुपागतं द्विजवरं सत्कृत्य संतोषत-
श्चैकान्ते कुशलानुयोगमुदितं पप्रच्छ कार्यं ततः ॥ ९० ॥

कच्चित्ते कुशलं विप्र रुक्मिणीप्रेषितोऽसि किम् ।
वाचयास्याश्च संदेशं शृणोमि त्वन्मुखादहम् ॥ ९१ ॥

एवमुक्तः स कृष्णेन विजने हरिणा स्वयम् ।
विप्रः पपाठ रुक्मिण्याः संदेशमतिमञ्जुलम् ॥ ९२ ॥

स्वस्ति श्रीमते निरतिशयसौन्दर्यगाम्भीर्यधैर्यौदार्यसौजन्य-सौमुख्यवैदुष्यमहाकुलीनत्वसौशील्याश्रितवात्सल्यसाधुसंरक्षक - त्वाद्यखिलावर्जकपरमकल्याणसद्गुणमणिनिकरसरस्वते सकलराज-न्यगणाभिवन्दितचरणकमलपीठाय निरुपमनिरतिशयनिश्शेष-निःसीमप्रभावाय दुष्टजननिग्राहकशिष्टजनपरिपालकनिजावताराय यदुकुलजलधिकौस्तुभाय शरणागतजनाभिलषितसमर्पणसुरपाद-पाय निष्किंचनानाथजनबान्धवाय वासुदेवाय साष्टाङ्गप्रणाम-पूर्विका भवच्छरणागताया रुक्मिण्या विज्ञप्तिरियम्—

आकर्ण्य तापशमनान्भवतो गुणौघा-
न्पश्यज्जनाक्षिफलदं सुभगं च रूपम् ।
अत्रागतद्विजमुखान्मम चित्तमेत-
त्त्वय्यञ्जसा विशति निस्त्रपमम्बुजाक्ष ॥ ९३ ॥

धीरा कुलादिमहती भुवि कात्र कन्या
धर्मार्थरूपकुलशीलवयःकलाद्यैः ।
आत्मानुरूपमुचितं न वृणीत कान्तं
काले मुकुन्द पुरुषोत्तम मोहनं त्वाम् ॥ ९४ ॥

तस्माद्वृतोऽस्ति स भवान्हि पतिर्मयात्मा
दत्तश्च तत्रभवते कुरु मां स्वजायाम् ।
मा चेदिपोऽभिमृशताल्लघु सिंहभागं
क्षुद्रः सृगाल इव मां करुणापयोधे ॥ ९५ ॥

संप्रीणितो यदि मया भगवान्परेशः
पूर्तेष्टदानसुरविप्रसमर्चनाद्यैः ।
गृह्णातु पाणिमिह मे समुपेत्य शौरि-
र्मा मां स्पृशन्तु दमघोषसुतादयोऽन्ये ॥ ९६ ॥

स त्वं विदर्भविषयान्समुपेत्य गूढं
श्वो भाविनीह निवहे मम सैन्ययुक्तः ।
उन्मथ्य चैद्यमगधेशबलं प्रसह्य
मां राक्षसेन विधिनोद्वह शौर्यशुल्काम् ॥ ९७ ॥

अन्तःपुरैकनिलयामनिहत्य बन्धू-
स्त्वामुद्वहामि कथमित्यपि मास्तु चिन्ता ।
पूर्वेद्युरस्ति महती कुलदैवयात्रा
यस्यां बहिर्नववधूर्गिरिजामुपेयात् ॥ ९८ ॥

यत्पादपङ्कजरजःस्नपनं महान्तः
कुर्वन्ति पापशमनाय सरोरुहाक्ष ।
तस्य प्रसादमिह चेन्न लभे तवाहं
जह्यामसून्व्रतकृशान्स कदापि मे स्यात् ॥ ९९ ॥

हरिर्द्विजवरं च तामिति निशम्य तुष्टो द्विजं
पुरो गरुडलाञ्छने निजरथेऽधिरोप्य स्वयम् ।
नृणामभिमताप्तये द्विजसमर्चनं सूचय-
न्निरेत्य पुरमासदत्त्वरितमेव तत्कुण्डिनम् ॥ १०० ॥

अथ कृष्णेन विप्रोऽसौ प्रेषितो रुक्मिणीगृहम् ।
गत्वा प्रतीक्षमाणां तामाख्यत्कृष्णसमागमम् ॥ १०१ ॥

विप्रसंदर्शनादेव प्रणष्टनिखिलव्यथा ।
सा राजपुत्री मनसा मुदितेन वचोऽब्रवीत् ॥ १०२ ॥

भूसुरेन्द्र तव साह्यसंभवाद्भाग्यमीदृगतुलं ममाभवत् ।
किं तवोपकरवै न किंचिदप्यस्ति युक्तमियमस्तु मे नतिः ॥

इत्युक्ता सा रमारूपा भक्त्या नत्वा द्विजोत्तमम् ।
संप्रेष्य च प्रीतचेताः क्रियां प्राभातिकीं व्यधात् ॥ १०४ ॥

अथ धृतमणिमयमङ्गळभूषा
शुभजलविरचितमज्जनपूजा ।
कटितटविलसितकान्तदुकूला
हरिपदसरसिजचिन्तनशीला ॥ १०५ ॥

द्विजवरवनिताजनकृतगीता
  निजपदनखराकलितनिजाक्षी ।
नरपतिकुलवरभीष्मकपुत्री
  हिमगिरिवरतनयालयमागात् ॥ १०६ ॥

भक्त्या समेत्य गिरिजां विधिवत्प्रणम्य
  संपूज्य दिव्यकुसुमैः स्वपतिं च कृष्णम् ।
संप्रार्थ्य भूसुरवधूरपि दक्षिणाभिः
  संतोष्य रङ्गतलमागमदायताक्षी ॥ १०७ ॥

पार्श्वद्वये मणिमयासनसंनिषण्णां-
  स्तांस्तांश्च भूपतिवरान्रुचिरानशेषान् ।
किंचिद्दृगन्तचलने स्वसखीभिरुक्ता-
  न्वीक्ष्यात्मनाथरथसंनिधिमागमत्सा ॥ १०८ ॥

अथ स्वमायामिव विश्वमोहिनीं
  शुभानवद्यावयवां स रुक्मिणीम् ।
समारुरुक्षुं निजसंनिधिं गतां
  द्रुतं गृहीत्वा स्वरथे न्यवेशयत् ॥ १०९ ॥

ततो जरासन्धमुखा नृपाला-
  श्चैद्याय तां साधयितुं सकोपाः ।
कृताभियोगा हरिसैन्यवीरैः
  पराजिता रुक्मिणमेत्य चख्युः ॥ ११० ॥

ततश्च रुक्मी द्रुतमेत्य कृष्णं रुद्ध्वा क्रुधा शौरिविरूपितः सन् ।
स्वपत्तनाभ्यर्णगदेश एव स्ववासमायात्कुपया दुरात्मा ॥

ततश्च कृष्णो निजसैन्यजालैः
सहैव तां राजसुतां प्रहृष्टाम् ।
कुशस्थलीं स्वागमनोत्सुकस्त्री-
पौरावृतां शीघ्रमसौ निनाय ॥ ११२ ॥

कुशस्थलीपुरे ततो हरिर्मुदा स्वमन्दिरे
समं निजैः सुहृद्गणैश्च रुक्मिणीं विवाह्य ताम् ।
तया विहारसौख्यमाप्नुवन्स भक्तवत्सलो
यथापुरं निजाः प्रजाश्चिरं हि पर्यपालयत् ॥ ११३ ॥

ततो भजन्तु माधवं सदानुवासरं द्विजाः
सुरासुरौघवन्दितं दुरात्मदर्पनाशकम् ।
स्वपादपद्मभक्तसाधुशीलवाञ्छितार्थदं
स्वधर्ममाचरन्तु चाविनाशिसौख्यसिद्धये ॥ ११४ ॥

रुक्मिणीकृष्णयोः पाणिग्रहणाख्यानमीदृशम् ।
बुधेन सदसि प्रोक्तं श्रुत्वा सर्वे मुदं ययुः ॥ ११५ ॥

वराहपुरभूसुरावसथनित्यवासी हरि-
र्दिवानिशमिहत्यभूसुरवरैश्च संपूजितः ।
सुरेष्विव महीसुरेष्वपि कृपालुरत्यादरं
प्रदर्श्य विमतेप्सितं व्यफलयच्च यस्तं भजे ॥ ११६ ॥

स्वपादकमलार्चनानिरतभूमिदेवैः समं
  * विवादपरमानसा व्यरचयंश्च ये मत्सरम् ।
रमापतिरसौ हरिः प्रशमयंश्च तेषां कलिं
  निजाश्रितमतं यथापुरमगाच्च यस्तं भजे ॥ ११७ ॥

निरन्तरभवत्पदाम्बुरुहनित्यसंसेवना-
  वलम्बमुदिताशयैरिह वराहकग्रामगैः ।
प्रकल्पितहिमोदकस्नपनवाद्यघोषादिभिः
  प्रसादितनिजाशयो हरिरभूच्च यस्तं भजे ॥ ११८ ॥

भक्तौघैः प्रतिवासरं निजपदद्वन्द्वार्चनान्तेऽर्पितं
  नैवेद्यं गुळमिश्रितं दधियुतं भक्तं च मुद्गौदनम् ।
भुक्त्वा स्वाश्रितभूसुरान्सतनयानाप्याययन्प्रीतित-
  स्तेनाभीष्टमपि प्रयच्छति च यस्तं श्रीधरं भावये ॥११९॥

एवं गोपाल गोपीजनमदन भवद्बाल्यलीलाभिरामं
  यावच्छक्तीह सत्वप्रकृतिजनमुदेऽमुं प्रबन्धं विधाय ।

---

* देवालयेऽस्मिन्भगवदुद्वहनच्छत्रधारणदीपिकाधारणतत्तैलदानादिषु सर्वे-ष्वपि भगवत्कैङ्कर्येषु पारम्पर्यक्रमेण द्विजा एव नियुज्यन्त इति तत्र देवालये च नास्तीतरेषां प्रवेश इति शाश्वती परिष्ठितिः । मध्ये चात्र केचिद्देशान्तरवास-परिक्षीणास्तिकमतयः वृषळपक्षपातमिव दर्शयन्तस्तत्प्रवेशादौ तानपि प्रोत्साह्य मर्यादामेतां भङ्क्तुमुद्युक्ता । तदेमं विषयमधिकृत्य प्रथमतुरीयवर्णयोः महानभूत्कलि· । तन्निमित्तश्च प्रधानाधिकरणे (High court) प्रवर्तितो व्यवहारः “सत्यमेव जयति नानृत”मिति नयेन प्रथमवर्णानुमतमेव निर्णीतः । अयमेवात्र कविना उपक्षिप्तो विषयः ॥

त्वत्पादाब्जेऽर्पयेऽहं प्रचुरगुणनिधे कृष्ण कारुण्यसिन्धो
प्रख्यातिं लम्भयामुं जगति करुणयेत्यर्थये श्रीपतिं त्वाम् ॥

श्रीपतिः स भगवान्करुणाब्धिः
सर्वरोगशमनं प्रविधाय ।
आत्मपादसरसीरुहभक्तिं
मह्यमत्र सुदृढां प्रददातु ॥ १२१ ॥

एवमनघकृष्णकलितकाचितवरभेदना-
घोषविषयदिव्यचरितवर्णनकृतिमञ्जुळम् ।
एतदखिलभक्तहृदयमोदकलनभाजनं
भव्यफलदमस्तु स हरिराकलयतु मङ्गळम् ॥१२२॥

इति हरिचरणारविन्दयुग्मा-
भरणतया कृत एष मत्प्रबन्धः ।
मदयतु भुवने मुरारिभक्तान्
भुवनपिता स हरिश्च मां सदाव्यात् ॥ १२३ ॥

प्रबन्धमेतं पठतां शृण्वतां चादरान्नृणाम् ।
करुणावारिधिः कृष्णः करोतु भुवि मङ्गळम् ॥ १२४ ॥

भक्तानां जनयन्मुदं सुमनसां चित्तं समुत्साहयं-
श्रोळीनां कमपि प्रहर्षमतुलं प्रत्यब्दमुत्पादयन् ।
विश्वेषां विदधच्च भक्तिममितां तन्याच्छुभं पश्यतां
श्रीकृष्णस्य विभोर्वराहपुरगः शिक्यप्रहारोत्सवः ॥ १२५ ॥

कपिमुनिवरगोत्रोद्भूतनारायणाख्य-
द्विजवररचितः श्रीकृष्णशिक्योत्सवाख्यः ।
सरळतरनिबन्धः कृष्णलीलातिभव्यो
हरिभजनपराणां संमदं तन्तनीतु ॥ १२६ ॥

इति श्रीनारायणकविविरचिते श्रीकृष्णशिक्योत्सवप्रबन्धे
पञ्चमाश्वासः समाप्तः ।

॥ समाप्तश्चायं ग्रन्थः ॥

# ॥ वृत्तलक्षणोदाहरणे ॥



## (१) शार्दूलविक्रीडितम्

सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ।

श्रीमद्यादववंश्यपूर्वसुकृतक्षीरोदराकाविधुम्

| | | | |
|---|---|---|---|
| प्रथम | आश्वासः | श्लोकाः | 1, 2, 9, 34, 36, 39, 40, 41, 45, 56, 59, 71, 72, 75, 81, 82, 88, 91, 95, 96. |
| द्वितीय | ,, | ,, | 1, 2, 22, 24, 28, 35. 38, 41. |
| तृतीय | ,, | ,, | 24, 25, 26, 32, 35, 44, 48, 49, 50, 56, 59, 62, 64, 67, 69, 71, 72, 73, 81, 105. |
| चतुर्थ | ,, | ,, | 1, 2, 3,4, 5, 6, 12, 15, 21, 57, 58, 59, 77, 81, 98, 119, 124, 125, 129. |
| पञ्चम | ,, | ,, | 34, 37, 48, 49, 51, 65, 68, 69, 74, 75, 76, 86, 90, 119, 125. |

## (२) भुजङ्गप्रयातम्

भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः ।

यदीयप्रसादादिदं भूतजातम्

| | | | |
|---|---|---|---|
| प्रथम | आश्वासः | श्लोकाः | 3, 4, 5, 100. |
| तृतीय | ,, | ,, | 60. |
| चतुर्थ | ,, | ,, | 69, 84. |

## (३) वसन्ततिलका

**उक्ता वसन्ततिलका तभजा जगौ गः ।**

दिव्यं यदीयवदनाम्बुजनिस्सरच्छ्री

प्रथम आश्वासः श्लोकाः 6, 7, 8, 10, 27, 28, 29, 33, 38, 42, 52, 53, 62, 64, 73, 74, 77, 83, 84, 85, 86, 87, 89, 90, 99.

द्वितीय „ „ 5, 17, 18, 20, 27, 43.

तृतीय „ „ 11, 20, 28, 36, 37, 68, 74, 98, 104.

चतुर्थ „ „ 8, 9, 11, 14, 18, 19, 68, 73, 100.

पञ्चम „ „ 3, 6, 10, 11, 12, 13, 18, 22, 23 38, 39, 45, 72, 84, 87, 93, 94, 95, 96, 97, 98, 99, 107, 108.

## (४) इन्द्रवज्रा

**स्यादिन्द्रवज्रा यदि तौ जगौ गः ।**

कालक्रमेणाथ तयोरभूवन्

प्रथम आश्वासः श्लोकाः 13, 14, 63.

पञ्चम „ „ 2, 62, 79, 82.

## (५) उपेन्द्रवज्रा

उपेन्द्रवज्रा जतजास्ततो गौ ।

कवेरकन्यामविमुक्तसत्वाम्

प्रथम आश्वासः श्लोकाः 35

तृतीय „ „ 14, 100

चतुर्थ „ „ 10, 17, 64.

## (६) उपजातिः

अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ।
मीनाक्षिनाम्नीं शुभलक्षणाढ्यां कुलेन शीलेन वयोगुणैश्च

प्रथम आश्वासः श्लोकाः 12, 17, 18, 20, 21, 23, 43, 66, 93, 101, 102, 105, 109, 110.
द्वितीय ,, ,, 14.
तृतीय ,, ,, 12, 22, 58, 92, 93, 99
चतुर्थ ,, ,, 25, 26, 29, 70, 78, 133.
पञ्चम ,, ,, 1, 5, 14, 80, 110, 111, 112.

## (७) मालिनी

ननमयययुतेयं मालिनी भोगिलोकैः ।
कपिमुनिवरगोत्राम्भोधिराकाशशाङ्कः

प्रथम आश्वासः श्लोकाः 11, 15, 22, 97, 111.
द्वितीय ,, ,, 12, 21, 23, 44, 46.
तृतीय ,, ,, 16, 29, 107.
चतुर्थ ,, ,, 16, 24, 27, 38, 71, 80, 103, 134.
पञ्चम ,, ,, 19, 33 43, 44, 47, 126.

## (८) पुष्पिताग्रा

अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ।
हरिचरितसुधारसाभिपूर्णो

प्रथम आश्वासः श्लोकाः 16.
तृतीय ,, ,, 18.
चतुर्थ ,, ,, 61, 85.
पञ्चम ,, ,, 9, 123.

## (९) द्रुतविलम्बितम्

द्रुतविलम्बितमाह नभौ भरौ ।
सुखयति श्रवसी पिकपञ्चमो

प्रथम आश्वास श्लोकाः 19, 67, 106.

## (१०) अनुष्टुप्

गुरु सर्वत्र षष्ठं स्यात्पञ्चमं च तथा लघु ।
द्विचतुर्थाङ्घ्रिगं ह्रस्वं सप्तमं विद्ध्यनुष्टुभः ॥
तटिनीं तां समालोक्य शीतळस्वच्छसूदकाम्

प्रथम आश्वासः श्लोकाः 24, 26, 70, 103, 104, 108.
चतुर्थ ,, ,, 60, 79, 82, 83, 99, 101, 132.
पञ्चम ,, ,, 81, 91, 92, 101 102, 104, 115, 124.

## (११) शालिनी

शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ।
कोऽयं चित्ताह्लादकारी प्रदेशः

प्रथम आश्वासः श्लोकाः 25, 76, 78, 79, 80.
द्वितीय ,, ,, 13.
तृतीय ,, ,, 97, 106.
चतुर्थ ,, ,, 75, 76.
पञ्चम ,, ,, 53, 85, 88, 89.

## (१२) रथोद्धता

रान्नराविह रथोद्धता लगौ ।
आपगापि च कवेरमहर्षेः

प्रथम आश्वासः श्लोकः 30.
द्वितीय ,, ,, 34.

तृतीय आश्वासः श्लोकाः 19, 23, 31, 45, 47, 78, 89.
पञ्चम ,, ,, 40, 41, 103.

## (१३) पञ्चचामरम्

जरौ जरौ जगाविदं वदन्ति पञ्चचामरम् ।
इयं हि सह्यजाधुनी तटान्तवेतसोज्ज्वला

प्रथम आश्वासः श्लोकाः 31, 46, 47, 48, 49, 50, 51, 60, 92, 94.
द्वितीय ,, ,, 30, 31, 32, 33, 36.
तृतीय ,, ,, 13, 33, 101.
चतुर्थ ,, ,, 7, 28, 34, 65, 72, 127.
पञ्चम ,, ,, 8, 113, 114.

## (१४) पञ्चचामरभेदः

जय जितान्तक जय नरान्तक जय दिनेशनिरीक्षण

पञ्चम आश्वासः श्लोकः 60.

## (१५) शिखरिणी

रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ।
उदग्देशे काश्यां सकलजनतापापहतये

प्रथम आश्वासः श्लोकाः 32, 44
द्वितीय ,, ,, 7.
तृतीय ,, ,, 54, 70
चतुर्थ ,, ,, 33.
पञ्चम ,, ,, 55, 56, 57, 71.

## (१६) स्रग्धरा

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।

दिश्यस्यां दक्षिणस्यां निखिलगुणयुताः सन्त्यनेकप्रदेशाः

प्रथम आश्वासः श्लोकाः 37, 57, 58, 69, 98
द्वितीय ,, ,, 16, 29. 37, 39, 45.
तृतीय ,, ,, 27, 30, 34, 38, 39, 40, 43, 61, 63, 90, 91, 94, 95, 96, 103.
चतुर्थ ,, ,, 13, 20, 31, 32, 102, 123, 128.
पञ्चम ,, ,, 15, 16, 73, 120

## (१७) स्रग्धरावान्तरभेदः

शिखिशिखण्डकमकरकुण्डलरुचिमनोहरकुन्तळम्

तृतीय आश्वासः श्लोकः 82.

## (१८) मन्दाक्रान्ता

मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ।

एते पान्थाः प्रकृतिगुणतो मन्दमेवानुयान्तीः

प्रथम आश्वासः श्लोकाः 54, 55.
द्वितीय ,, ,, 15, 25.
तृतीय ,, ,, 41, 42, 51, 52, 53, 55.
चतुर्थ ,, ,, 90, 91 92, 93, 94, 95 96, 97.
पञ्चम ,, ,, 30, 45, 63, 77, 78.

## (१९) स्वागता

स्वागतेति रनभाद्गुरुयुग्मम् ।

भूसुरेन्द्रतनया अपराह्णे

प्रथम आश्वासः श्लोकाः 61, 107.
द्वितीय ,, ,, 11.
तृतीय ,, ,, 17, 21, 102.
चतुर्थ ,, ,, 131.
पञ्चम ,, ,, 121

## (२०) पृथ्वी

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ।

कवेरमुनिकन्यकासलिलपूतपार्श्वस्थलः

प्रथम आश्वासः श्लोकाः 65.
द्वितीय ,, ,, 3, 4, 19, 40, 42.
तृतीय ,, ,, 65, 66
चतुर्थ ,, ,, 22, 23, 35, 36, 37, 56, 63, 104, 121.
पञ्चम ,, ,, 52, 83, 100, 116, 117, 118.

## (२१) स्रग्विणी

रैश्चतुर्भिर्युता स्रग्विणी संमता ।

वैदिका याज्ञिका धार्मिकाः स्नातकाः

प्रथम आश्वासः श्लोकाः 68.
चतुर्थ ,, ,, 66, 67, 74.
पञ्चम ,, ,, 64.

## (२२) आर्या

लक्ष्मैतत्सप्तगणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं न लघू वा प्रथमेऽर्धे नियतमार्यायाः ॥
षष्ठे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदनियमः ।
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥

सप्तमदिवसे गोपीवस्त्रापहृतिं समस्तजनहृद्याम्

द्वितीय आश्वासः श्लोकः 6, 8, 9, 10.
चतुर्थ ,, ,, 30, 40, 41, 42, 43, 44, 45, 46, 47, 48, 49. 50, 51, 52, 53, 54, 62, 122, 126, 130.

## (२३) वसन्तमालिका

विषमे ससजा गुरू समे चेत् सभरा यश्च वसन्तमालिका स्यात् ।

धरणेरसितातपत्रमेतत्

द्वितीय आश्वासः श्लोकः 26.
तृतीयं ,, ,, 15
पञ्चम ,, ,, 7.

## (२४) कनकमञ्जरी

नश्च रौ लगौ कनकमञ्जरी ।

कमललोचनं कम्बुकन्धरम्

तृतीय आश्वासः श्लोकाः 1, 2, 3, 4, 5, 6, 7, 8, 9, 10.
चतुर्थ ,, ,, 109, 110, 111, 112, 113, 114, 115. 116, 117, 118.

## (२५) प्रमिताक्षरा

प्रमिताक्षरा सजससैरुदिता ।
प्रमिताक्षरा सह सखीभिरियम्

तृतीय आश्वासः श्लोकः 46.

## (२६) इन्दुवदना

इन्दुवदना भजसनैः सगुरुयुग्मैः ।
वित्तमदमत्तमतिरस्ति मम भर्ता

तृतीय आश्वासः श्लोकः 57.

## (२७) मदिरा

सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा मदिरा ।
पूजकवैष्णववर्य इतोऽनुमतेन विभोर्हरिपादयुगम्

तृतीय आश्वासः श्लोकाः 75, 76, 77.

## (२८) हीरकं

वह्निटगणमन्त्यरगणमेव चरणशोभितं
हीरक इति नाम भवति काममवति सज्जनम् ।
कुन्दरदनमिन्दुवदनमन्दहसितमञ्जुळम्

तृतीय आश्वासः श्लोकाः 79 टगण. = गु ल ल ल ल.
पञ्चम ,, ,, 27, 122.

## (२९) क्रौञ्चपदा

क्रौञ्चपदाम्भौस्भौ नननान्गा विषुशरवसुमुनिविरतिरिह भवेत् ।
काचितभेदप्रेक्षणलोलं क्रतुकरमुनिगणगृहजनशुभदम्

तृतीय आश्वासः श्लोकः 80.

## (३०) मणिगुणनिकरः

**वसुमुनियतिरिह मणिगुणनिकरः ।**

जनिमृतिपरिभवविदळनकृतिनाम्

तृतीय आश्वासः श्लोकौ 83, 84.

## (३१) चण्डी

**नयुगळसयुगळगैरिति चण्डी ।**

दिनकरहिमकरनेत्रसरोजम्

तृतीय आश्वासः श्लोकः 85.
पञ्चम ,, ,, 105, 106.

## (३२) इन्दुमुखी

**(भ-त-य-स-ग-ग)**

इन्दुमुखं कुन्दरदं चन्द्रकुलाब्धीन्दुम्

तृतीय आश्वासः श्लोकः 86.

## (३३) तोटकम्

**इह तोटकमम्बुधिसैः प्रथितम् ।**

जनितापहरं करुणारसदम्

तृतीय आश्वासः श्लोकः 87.

## (३४) मणिमाला

**त्यौ त्यौ मणिमाला च्छिन्ना गुहवक्त्रैः ।**

स्वामिन्श्रुतिवाग्भिर्वेद्यं तव रूपम्

तृतीय आश्वासः श्लोकः 88.
पञ्चम ,, ,, 32.

## (३५) द्रुमिळा

अयि कंसनिपूदन हंसवरस्तुत दिव्यनिजापरिमेयगुण

चतुर्थ आश्वासः श्लोकः 39.

## (३६) कनकमालिका

रो नरौ नरनरा भवन्ति खलु यत्र सा कनकमालिका ।
इन्दिरारमणमिन्दुसुन्दरमुखेन्दुमन्दहसिताञ्चित

चतुर्थ आश्वासः श्लोकः 55.

## (३७) तूणकम्

तूणकं समानिकापदत्रयं विनान्तिमम् ।
वेङ्कटेशदेव एष लालितो महीसुरैः
(समानिका = रगणजगणयोग )

चतुर्थ आश्वासः श्लोकः 120.
पञ्चम ,, ,, 20, 21.

## (३८) मञ्जुभाषिणी

सजसा जगौ भवति मञ्जुभाषिणी ।
रजनीप्रयाणपटहस्वनोपमा

पञ्चम आश्वासः श्लोकः 4.

## (३९) मत्तमयूरम्

वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् ।
वन्दे देवं वाञ्छितदानामरवृक्षम्

पञ्चम आश्वासः श्लोकः 17.

## (४०) प्रमाणिका

प्रमाणिका जरौ लगौ ।

विहङ्गराजवाहनम्

पञ्चम आश्वासः श्लोकौ 24, 25.

## (४१) शृङ्गारधामवृत्तम्

श्रीकृष्ण हे देव पीताम्बरोल्लासिमध्यस्थलाबद्ध-

काञ्चीकलापप्रदीप्राम्

पञ्चम आश्वासः श्लोकः 26.

## (४२) सुन्दरिकावृत्तम्

इह सुन्दरिका पिङ्गळमुनिनोक्ता सद्वयतो भसताज्लभगाः ।

दिवसेशसुतातीरविहरणो देवेप्सितदो दितिजान्तकरः

पञ्चम आश्वासः श्लोकः 28.

## (४३) हरिणी

रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ।

यतिजनमनोवासं वेधोमुखामरसंनुतम्

पञ्चम आश्वासः श्लोकाः 29, 50, 54, 70.

## (४४) तामरसम्

इति वद तामरसं नजजाद्यः ।

सरसिजरेणुपिशङ्गदुकूलम्

पञ्चम आश्वासः श्लोकः 31.

## (४५) मदनार्ता

मायातिगभूमा च रमाया हृदयेशः

पञ्चम आश्वासः श्लोकः 34.

## (४६) वाणी

इन्द्रादीनां निजचरणाम्बुजयुगपूजानिरतानाम्

पञ्चम आश्वासः श्लोकः 36.

## (४७) कुन्दवृत्तम्

(न-न-न-न-न-ग-ग)

नवजलदनिभवपुषमतिमहितनन्दम्

पञ्चम आश्वासः श्लोकः 37.

## (४८) माणवकम्

माणवकं भात्तलगाः ।

भूरिकृपं भूतिददम्

पञ्चम आश्वासः श्लोकौ 58, 59.

## (४९) मणिमध्यम्

स्यान्मणिमध्यं चेद्भमसाः ।

नन्दयशोदानन्दददम्

पञ्चम आश्वासः श्लोकः 61.

## (५०) वियोगिनी

विषमे ससजाः समे गुरुः सभरा लोऽथ गुरुर्वियोगिनी ।

अयि देव भवत्पदाम्बुजं सकलाभीष्टविधानलालसम्

पञ्चम आश्वासः श्लोकः 66.

## (५१) वंशस्थवृत्तम्

जतौ तु वंशस्थमुदीरितं जरौ ।

अथ स्वमायामिव विश्वमोहिनीम्

पञ्चम आश्वासः श्लोकः 109.

## (५२) नर्दटकम्

यदि भवतो नजौ भजजला गुरु नर्दटकम् ।

कृपणदशापिशाचगणमोचनवेत्रलताः

पञ्चम आश्वासः श्लोकः 67.

## (५३) धवळम्

धवळमिह भवति रसमितनगणगुरु यदा ।

दुरितहरणनिपुणविमलचरणसरसिजम्

चतुर्थ आश्वासः श्लोकाः 86, 87, 88, 89

## (५४) अर्धसमवृत्तम्

(प्रथमपादे 12 अक्षराणि)

(द्वितीयपादे 10 अक्षराणि)

विश्रान्तिसौख्यं लभस्वाखिलाण्डेश दूराध्वसञ्चारतः श्रीपते

चतुर्थ आश्वासः श्लोकाः 105, 106, 107, 108.

## (५५) चण्डवृष्टिप्रपातदण्डकः

यदिह नयुगळं ततः सप्तरेफास्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः ।

जय जय वसुदेवसूनो वराहाग्रहार

पञ्चम आश्वासः दण्डकः 1.

### (५६) जीमूतदण्डकः

प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्याळजीमूत-
लीलाकरोद्दामशङ्खादयः ।

इह निखिलगुरो जगत्स्थावरं जङ्गमम्

पञ्चम आश्वासः दण्डकः 2.

### (५७) लीलाकरदण्डकः

प्रतिचरण......

जय जय निगमागमज्ञानशुद्धान्तरङ्गैः

पञ्चम आश्वासः दण्डकः 3

### (५८) उद्दामदण्डकः

प्रतिचरण......

जय जय भगवन्ननाद्यन्त हे वेङ्कटेश

पञ्चम आश्वासः दण्डकः 5.

### (५९) शङ्खदण्डकः

प्रतिचरण......

जय जय पृथिवीभरोच्छित्तये ब्रह्मदेवेन्द्र

पञ्चम आश्वासः दण्डकः 4.

# सुदर्शनोपाख्यानम् ।



[ कविनात्र प्रथमाश्वासोपान्त्यश्लोकेनोपक्षिप्तम् ]

अस्य मूलं महाभारते आनुशासनिकपर्वणि द्वितीयोऽध्यायः ।

अयमत्र कथासंग्रहः—

पुरा हि युधिष्ठिरः पाण्डवः कं वा धर्ममाश्रित्य केन गृहिणा विजितो मृत्युरिति भीष्मं पितामहमप्राक्षीत् । स चात्रेममुदाहरति स्मेतिहासम् ॥

आसीद्दुर्जयस्य प्रजापतेर्वैवस्वतस्य मनोः कुले प्रसूतस्य सुतो दुर्योधनो नाम सर्वगुणसंपन्नः । तं च देवनदी नर्मदा चकमे । विवाहश्च तयोः प्रववृते । जज्ञे च तस्यां कन्या काचिन्नाम्ना रूपेण च सुदर्शनेति । तां च राजकन्यां राजीवलोचनां स्वपरिचरणाय भगवानग्निरकामयत । अग्न्यागारे पित्रा नियुक्तां तां दृष्ट्वा देवो हुताशनः कामपरवशो भज मामिति रहसि प्रार्थयामास । सा तु व्रीडिता तमेवमब्रवीत्—'ननु भोः कुलीनानां कन्यकानां पितरौ बान्धवा वा प्रदाने प्रभवन्ति । हुत एव च विभावसौ वैवाहिकमन्त्रैः, सत्सभानिविष्टायाः कन्यायाः पतिः शरणं भवति । तत्प्रसीद, देव पितरं मे वरयस्व' इति ॥

अथ च नातिचिरात्तत्पितरि समारब्धयज्ञे विप्ररूपी हुतवहो नृपं तं तत्कन्यामयाचत । स च महीपतिर्दरिद्रोऽसावसवर्णश्चेति तस्मै स्वां कन्यां प्रदातुं नाकल्पयद्भावम् । तदा च हवनार्थमाहितो वह्निर्वेद्यां प्राणश्यत । तेनातितरां भीतः स नृपतिर्मन्त्रिणो ब्राह्मणांश्च किमिदमिति पप्रच्छ । ते च तत्परिज्ञानाय गुह्यैर्नामभिर्हव्यवाहमाजुहुवुः । तदा तत्पुरत आविर्भूतो दहनो वरयाम्यात्मनोऽर्थाय दुर्योधनसुतामिति स्वाशयं प्रकटीचकार । तदेतद्ब्राह्मणेभ्यो विज्ञाय हृष्टो राजा तथेति प्रतिज्ञाय भगवन्तं तं तन्नित्यसांनिध्यं स्वयज्ञभूमौ शुल्कं वरयामास । तेन च तथेति प्रतिज्ञाते अहतवाससं स्वां कन्यां समलंकृत्य स राजा तस्मै ददौ । प्रतिगृह्य च विधिना तां विभावसुः गर्भमस्यां समादधे । सोऽयं सुदर्शनस्तस्यां तत्पुत्रत्वेनाजनि । शैशव एव स सर्वमध्यैष्ट । अथ च संप्राप्ते यौवने ओघवता महीपतिना प्रत्तामोघवतीं नाम कन्यकां देवरूपिणीं परिणीय तया सह गार्हस्थ्यमाश्रमं यथाविध्यनुतिष्ठन्कुरुक्षेत्रमध्यातिष्ठत् । प्रतिजज्ञे च 'गृहस्थः सन्नेवाहं मृत्युं विजेष्ये' इति । स्वभार्यामोघवतीं चैवमनुशशास—'नास्त्यतिथिसत्कारात्परो धर्मः । स च कदापि कथमपि त्वया नोल्लङ्घनीय' इति । तया च तथेति प्रतिज्ञाते इध्माहरणाय निष्क्रान्ते च सुदर्शने तं जिगीषुर्मृत्युः समयमाचकाङ्क्ष । तदा धर्मो गृहीतविप्रवेषः, ओघवतीं प्राप्य तदात्मदानेन स्वस्यातिथ्यं प्रार्थयामास । सा च भर्तृवचनमनुस्मृत्य सलज्जमेवं जगाद—न कदाप्यतिथिरवमन्तव्य इति ॥

ततश्च स तया सह समगच्छत । पश्चात्प्रतिनिवृत्तेन भर्त्रा क्वासीति व्याहृता ओघवती, आत्मन उच्छिष्टत्वबुद्ध्या विप्रकोपशङ्कया च तूष्णीमासीत् । पुनः सुदर्शने किमिदमिति वदति उटजस्थो विप्रो यथावृत्तं न्यवेदयत् । तस्मिंश्च समये मृत्युः हीनप्रतिज्ञमत्र हनिष्यामि इति सुदर्शनमन्वगात् । अतिथ्युदितं च वृत्तं ससंतोषमनुमन्वाने सुदर्शने सर्वासु दिक्षु सत्यमेवेदं न मिथ्या इति नादः सर्वतोऽसकृदुदभूत् । तत आश्रमाद्द्विजरूपो धर्मो विनिर्गत्य तमुवाच—धर्मोऽहमस्मि । भवतु ते भद्रम् । त्वज्जिज्ञासयाहमागतः । ते सत्यं ज्ञात्वा परमा मे प्रीतिरुदभूत् । निर्जितश्च त्वया मृत्युः । एषा हि स्वेन तपसा संयुक्ता ब्रह्मवादिनी लोकस्य पावनार्थं शरीरस्यार्धेन ओघवतीनाम्नी सरिच्छ्रेष्ठा भविष्यति, त्वां चार्धेनानुयास्यति । इति तं तां चानुजग्राह ॥

# ॥ श्लोकसूची ॥